# शास्त्रविचारतरङ्गिणी

( निबन्धसङ्ग्रहः )

प्रवाहकः [ रचयिता ]—जनार्दन गङ्गाधर रटाटे

एम् ए० ( लब्धस्वर्णपदकः ), पी एच्० डी० साहित्याचार्यः, साहित्यरत्नम्



प्रकाशकः

जनार्दन गङ्गाधर रटाटे,

उपाचार्यः

संस्कृतविभागः, कलासङ्कायः, का० हि० वि० वि०

वाराणसी

वि० सं० २०५३

ई० व० १९९६

प्रथमसंस्करणम्

उ. सं. सं. के 'विविध पुरस्कार' हेतु

८५

घोषणा पत्र

१- पुस्तक का विषय - शास्त्रीय दार्शनिक निबंध
(संस्कृत भाषा में)

२- लेखक का नाम और पता :-डा० जनार्दन गंगाधर रटाटे
के० २२।४७ दुर्गाघाट, वाराणसी (उ० प्र०

३- संस्था का नाम जहां लेखक कार्यरत है :- संस्कृत विभाग, कला संकाय का० हि० वि० वि०.

४-(क) मैं प्रमाणित करता हूं कि मेरी उपर्युक्त रचना मौलिक है तथा प्रथम बार वर्ष १९६६ में प्रकाशित हुई है।

(ख) यह रचना शोधग्रन्थ नहीं है।

(ग) मैं जन्म से उत्तर प्रदेश का निवासी हूं।

ह०- जनार्दन गङ्गाधर रटाटे
(जनार्दन गंगाधर रटाटे)
दि. ११-८-७०

# शास्त्रविचारतरङ्गिणी

( निबन्धसङ्ग्रहः )

प्रवाहकः [ रचयिता ]—जनार्दन गङ्गाधर रटाटे

एम् ए० ( लब्धस्वर्णपदकः ), पी एच्० डी० साहित्याचार्यः, साहित्यरत्नम्



प्रकाशकः

जनार्दन गङ्गाधर रटाटे,

उपाचार्यः

संस्कृतविभागः, कलासङ्कायः, का० हि० वि० वि०

वाराणसी

वि० सं० २०५३ प्रथमसंस्करणम्

ई० व० १९९६

ग्रन्थप्राप्तिस्थानम्—
**रटाटेभवनम्**
के० २२/४७ दुर्गाघाट, वाराणसी

तरङ्गिणीप्रवाहकस्य
प्रकाशकस्य निवासः—
**रटाटेभवनम्,**
के० २२।४७ दुर्गाघाट, वाराणसी



मूल्यम्— रूप्यकमितम्

मुद्रकः—
**आचार्यमुद्रणालयः,**
ए १।१२ गायघाट, वाराणसी

# साभिलाषं वन्दनं निवेदनञ्च

**अयि शास्त्रचिन्तननिरता विद्वांसः !** समये-समये श्रीगुरुचरणपाथोजसन्निधाने समुपविश्य मया यो विविधशास्त्ररूपो गिरिराजः सेवितः, तस्मान्निस्सरन्ती अनादिरूपापि नूतनं-नूतनं स्वरूपं धारयन्ती इयं शास्त्रविचारतरङ्गिणी विविधैस्तत्तच्छास्त्रविचारतरङ्गैर्विस्तरं नीयमाना मया प्रवाह्यमाना परमेशानुकम्पया श्रीमतां सकाशं क्रमेण समागच्छतीति मे महतः प्रमोदस्यायमवसरः ।

सपरिशिष्टा इयं शास्त्रविचारतरङ्गिणी परमेशकृपामूला, तदभिन्नसद्गुरुकृपामूला च । अतः, अहं सर्वप्रथमं कुलदेवेष्टदेवादिरूपं परमेशं भूयो भूयो वन्दे । तदनु सद्गुरून् कै० रामचन्द्रशास्त्रिहोसमनेमहोदयान्, म० म० श्री पं० बटुकनाथशास्त्रिखिस्तेमहोदयान्, म० म० श्री पं० विश्वनाथशास्त्रिदातारमहोदयान्, प्रो० श्रीनारायणमिश्रमहोदयान्, महाकविश्रीवसन्तत्र्यम्बकशेवडेमहोदयान् प्रो० विश्वनाथभट्टाचार्यमहोदयान् च वन्दमानस्तान् प्रति कृतज्ञतां प्रकाशयामि । श्री पं० जगन्नाथशास्त्रिमानवल्लिमहोदयं प्रति धन्यवादं प्रकटयामि । चिरञ्जीविनं माधवजनार्दनरटाटेनामकं छात्रं शुभाशीर्वादैर्योजयामि । मुद्रणालयाधिपं श्रीराजेन्द्राचार्यं धन्यवादैः सभाजयामि ।

अस्यां तरङ्गिण्यामुन्मज्जन् अग्रेसरन् च विद्वन्मानसमरालो निरन्तरं मोदतामिति मेऽस्त्यभिलाषः ।

जिज्ञासुच्छात्रसमूहरूपो मरालबालनिवहोऽपि स्वीयरुच्यनुसारं तरङ्गान् तरङ्गं तरङ्गांशं वा सेवमानः शास्त्रीयं विषयं सारल्येन हृदयङ्गमं करोत्विति चास्ति मेऽभिलाषः ।

'काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्'

इति सूक्तिर्मे प्रेरणास्रोतः ।

अतः, एतद्विनोदनिरता विद्वांसः अस्यास्तरङ्गिण्या उपयोगितां स्वीकरिष्यन्ति इति मे विश्वासः ।

'श्रेयसि केन तृप्यते' इत्येतां सूक्तिमनुसृत्य इमां तरङ्गिणीं महातरङ्गिणीरूपां कर्तुमीहमानोऽहं सगणं भगवन्तमुमारमणं तत्सिद्धये वन्दे प्रार्थये च ।

अयमपि मेऽस्त्यभिलाषो यत् सुजना इमां तरङ्गिणीमनुशील्य यथोचितं संशोधनमपेक्षितञ्चेत् तथा मां सूचयन्तु यथा अहं द्वितीये संस्करणे तन्निवेशं विदध्याम् ।

अमुं समग्रं प्रयासं सादरं सप्रणामञ्च परमेशपादाम्बुजयोः समर्पयामि ।

मार्गशु० ११ गीताजयन्ती — परमेशाभिन्नसद्गुरुवशंवदः—

दि० २०-१२-१९९६ — **जनार्दन गङ्गाधर रटाटे**

# साशीर्वादा अभिप्रायाः

श्रीगुरुगणेशः

राष्ट्रपतिसम्मानितो महामहोपाध्यायः
**प्रो० बटुकनाथशास्त्रीखिस्ते**

'श्रीनिकेतनम्', एन्० १६/४३ पत्रकार-
नगर, विनायका, वाराणसी–२२११००

**अध्यक्ष :—काशीपण्डितसभा,**
**वाराणसी**

दूरभाष ३१३२६७

१९–११–९६

वाराणस्यामाबाल्यात् गीर्वाणवाणीपरिचरणपरेण समुन्मिषत्प्रतिभाभरेण मदीयप्रियान्तेवासिना रटाटेवंशमुक्तामणिना श्री जनार्दनशास्त्रिणा यथाकालं निबद्धानां नानाशास्त्रावगाहनलब्धरत्नानामालोकपुञ्ज इव 'शास्त्रविचारतरङ्गिणी' नामा प्रबन्धो मया दृशोर्गोचरतामनायि। सङ्ग्रहेऽस्मिन् साहित्यन्यायवेदान्तमीमांसादिबहुविधविषयाणामभिनवशैल्या मनोरमया च गिरा यत्तत्त्वार्थकौशलमाविष्कृतम्, तेन नितरामस्य विद्वज्जनग्राह्यतां विद्यार्थिवृन्दज्ञानवर्धकताञ्च समर्थये।

'मितञ्च सारञ्च वचो हि वाग्मिता' इति न्यायेन सङ्क्षेपतः सारप्रकाशननैपुणी चाऽत्र परिलक्ष्यते।

'मानसभारती' प्रभृतिप्रबन्धतल्लजनिर्माणलब्धं गौरवमस्य पूर्वतः प्रथते विदुषां समवाये। किञ्च कमनीयकाव्यमाधुरीधुरीणताऽप्यस्य सहृदयहृदयावर्जिनी जागर्ति। लब्धबहुमानपदकोऽयमन्तर्वाणिसमाजे सर्वतो महीयते। एवंविधस्य सर्वगुणसम्पन्नस्य जनार्दनशास्त्रिणो भविष्यति कालेऽपि शारदेन्दुसहोदरं दिङ्मूलकुक्षिम्भरि यशोवितानं प्रवर्धतामित्याशंसमानोऽहं शुभाशीराशिभिरमुं संवर्धयामि। इति शिवम्।

**( ह० ) बटुकनाथशास्त्री खिस्ते**

प्रो० श्रीनारायणमिश्रः

संस्कृतविभागः,
कलासङ्कायः,
काशीहिन्दूविश्वविद्यालयः,
वाराणसी

दि० १२-१२-१९९६

॥ श्रीः ॥

'शास्त्रविचारतरङ्गिणी' नामको निबन्धसङ्ग्रहो डॉ० श्री जनार्दन-गङ्गाधररटाटेमहाशयेन सङ्ग्रथितो मयाधीतः। अत्र सङ्ग्रहे त्रयस्तरङ्गाः समुल्लसन्ति। तत्राद्ये तरङ्गे साहित्यशास्त्रीया नव निबन्धाः, द्वितीये तरङ्गे दर्शनशास्त्रीयाः पञ्चदश, तृतीये च तरङ्गे विविधशास्त्रीयाः अष्टौ निबन्धाः सन्ति।

सर्व एवैते निबन्धाः प्रामाणिकाः प्रसन्नगम्भीराश्च।

श्रीमता रटाटेमहाशयेन काशीस्थहिन्दूविश्वविद्यालयीयसंस्कृतविभागे चिरादध्यापनं शोध-निर्देशनञ्च विदधता यावान् श्रमः तत्र तत्र शास्त्रे कृत-स्तस्य सर्वस्य परिणामभूतोऽयं निबन्धसङ्ग्रहः।

आशासे यदयं निबन्धसङ्ग्रहो विदुषां मोदाय, एम्० ए०, आचार्यादि-परीक्षासु सल्लग्नानां छात्राणां च कृते विशेषेणोपकारको भवेदिति—

विद्वदनुग्रहाभिलाषुकः

( ह० ) श्रीनारायणमिश्रः

विद्याभूषण, राष्ट्रपतिपुरस्कृत
महामहोपाध्याय, शास्त्ररत्नाकर,
न्यायप्रभाकर, न्यायकेशरी,
नीतिशास्त्रप्रवीण, राजनीति विशेषज्ञ
**पं० विश्वनाथशास्त्री दातार**

निवास :—
के. २२|८१
ब्रह्माघाट, वाराणसी
दि० १०-१२-२६

श्रीगुरुः शरणम्

शास्त्रविचारतरङ्गिण्यः नैरन्तर्येण सृष्टिकालादारभ्यैव वादमुखेन प्रवहन्त्यः चकासते चकासिष्यन्ते च विचाराणामनेकरूपत्वात् तर्कस्याप्रतिष्ठानात्। अत एव, 'पिण्डे-पिण्डे मतिर्भिन्ना' इत्युक्तं सङ्गच्छते दृश्यते चैतदत्रापि।

तासां तरङ्गिणीनां समूहालम्बनं जागरूकं ज्ञानं कवयितॄणां कृते वैदग्ध्यप्राप्तये चाभ्यर्हितमेव-'अहो भारो महान् कवेरित्युक्तत्वात्।

न ह्येतासां तरङ्गिणीनामनुपयोगित्वमप्रशस्तत्वं वा औपासनमतेन पारमार्थिकनैतिकमताभ्यां च वेदितव्यम्। 'साङ्ख्यं पातञ्जलं योग' इत्यारभ्य जैनमार्हतसंहितेत्यन्तैर्नामभिर्गणेशस्तुतया निर्विवादात्, तत्तत्सम्प्रदायेषु स्थितानां तेषां-तेषां कृते निर्वाणमार्गप्राशस्त्येन जीवितयात्रासाफल्यनिर्णयाच्च।

तत्तच्छास्त्रनिर्झरेभ्यो विनिःसृतानां स्रोतसामेकत्रीकरणेन इयं तरङ्गिणी महानदी मम पैतृष्वसेयस्य कवयितुः श्रीजनार्दनगङ्गाधररटाटेमहोदयस्य महति हृत्सरोवरे समुद्भूता। अत्र श्रीगोकुलनाथोपाध्यायप्रभृतीनां विद्यापारावारदृश्वनां विचारः तरङ्गांशरूपेण आगतः विदुषां महामोदाय आस्ते।

इमां महातरङ्गिणीं पश्यतां कृते तत्तद्विद्यां प्रति औत्कण्ठ्यमवश्यमुदेष्यति जिज्ञासूनां हृदीति नूतनतया प्रकाशभावं गतेयं महातरङ्गिणी सार्थक्यं भजते इति जानन्नहं पैतृष्वसेयस्य आयुष्मतो जनार्दनस्य सर्वविधः आमुष्मिकः अयः ऐहिकः नयश्च इत्युभयरूपं परमं लक्ष्यं सुसिद्धं भवत्विति सप्रश्रयं श्रीगणेशं विद्यानीतिस्तुतं प्रार्थये।

**( ह० ) विश्वनाथ रामचन्द्रदातारः**

# शास्त्रविचारतरङ्गिणी

## तदीयः साहित्यशास्त्रविचारनामकस्तरङ्गः



## तदीयः दर्शनशास्त्रविचारनामकस्तरङ्गः

## तदीयः दर्शनशास्त्रविचारनामकस्तरङ्गः ( अवशिष्टः )



## तदीयः विविधशास्त्रविचारनामकस्तरङ्गः



## तदीयं परिशिष्टम्



—:०००:—

॥ श्रीः ॥

# काव्यप्रकाशोक्तकाव्यलक्षणविचारः

"तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" इति काव्यलक्षणं काव्यप्रकाशकारैः मम्मटभट्टैः कृतम्। अस्यार्थः—काव्यत्वं शब्दार्थोभयवृत्ति, तौ च शब्दार्थौ अदोषौ = दोषरहितौ, सगुणौ=माधुर्यादिगुणयुक्तौ, क्वापि पुनः अनलङ्कृती = सर्वत्रसालङ्कारौ क्वचित्स्फुटालङ्कारविरहेऽपि न काऽपि हानिः।

काव्यं पठति-इत्यादि प्रयोगेणार्थस्य पठनासम्भवाच्छब्दे काव्यत्वं सिद्ध्यति। शब्दपाठमात्रेण काव्यप्रयोजनस्य रसास्वादस्य कृत्याकृत्यप्रवृत्ति-निवृत्त्योश्चाभावादर्थेऽपि काव्यत्वम्। शब्दार्थयोर्विशेषणमदोषाविति, अनेनपदेन दोषसामान्याभाव एव विवक्षितः। सगुणावित्यनेन माधुर्यौजःप्रसादादयः गुणाः गृह्यन्ते। क्वापि-अनलङ्कृतीत्यस्यायमर्थः—सर्वत्र सालङ्कारौ क्वचित्स्फुटालङ्कार-रहितौ। यद्यपि-अलङ्काराणां संयोगवृत्त्या कटककुण्डलादिवत्काव्यशोभा-करत्वेन सर्वत्रस्थितिरावश्यिकी, तथापि यत्र रसस्य स्फुटं प्रतीतिस्तत्र तेषामभा-वोऽपि न दोषाय; यतः काव्ये चमत्काराधायकत्वं रसालङ्कारयोर्द्वयोरपि आलङ्कारिकैः स्वीक्रियते। अत्रोदाहरणम्—

तस्याः खुरन्यासपवित्रपांसुमपांसुलानां धुरि कीर्तनीया।
मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत्॥

इत्यत्र न कोऽपि दोषः वर्तते, अपि तु अत्र माधुर्यप्रसादगुणसत्त्वात्, उपमालङ्कारसत्त्वात्, शान्तरससत्त्वाच्च अस्य काव्यत्वं स्वीक्रियते।

प्रश्नः—काव्यत्वं न शब्दार्थोभयवृत्ति, काव्यमुच्चैः पठ्यते, काव्यं श्रुतमर्थो न ज्ञातः इत्यादिव्यवहारतः शब्दस्यैव काव्यपदार्थप्रतिपत्तेः।

उत्तरम्—शब्दमात्रे काव्यत्वाङ्गीकारे मूलमात्राध्येतुः काव्यज्ञः इति व्यवहारा-दर्शनात्, शब्दापेक्षया अर्थाश्रितानामलङ्काराणां, गुणानां, दोषाणाम्, अर्थमूलध्वनेश्चाधिक्यप्रतिपादनेन-अर्थेऽपि काव्यत्वं वाच्यमेव।

प्रतिप्रश्नः—यदि अर्थेऽपि काव्यत्वं स्वीक्रियते, तर्हि काव्यं श्रुतमर्थो न ज्ञातः इति प्रयोगोपपत्तिः कथं स्यात्?

उत्तरम्—"समुदाये प्रवर्तमानः शब्दः एकदेशेऽपि प्रवर्तते" इति भाष्यकारोक्त्या वस्त्रैकदेशे दग्धे वस्त्रं दग्धं इतिवत्प्रयोगोपपत्तिः स्यात्। एवं च काव्यत्वमुभयगतं सिद्धमेव।

प्रतिप्रश्नः—एवमपि काव्यलक्षणमनुचितं यतः—न्यक्कारो ह्ययमेवेत्यादिश्लोके ( पद्ये ) व्यङ्ग्यसत्त्वेन सर्वैरुत्तमकाव्यता अस्याङ्गीकृता। [अरयः इत्यत्र बहुवचनेन एवंभूतस्य त्रैलोक्यविजयिनः ममापि बहवः शत्रवः सन्तीति रावणस्य निर्विण्णता व्यज्यते। तत्रापि–असौ तापसः इत्यनेन पदेन शस्त्रानभिज्ञता व्यज्यते। सोऽपि एकः, यदि बहवः स्युस्तदा न काऽपि हानिः स्यात्। स च दूरे तिष्ठेच्चेन्न मानहानिः, किन्तु अत्रैव इत्यनेन सम्मुखस्थितस्यापि शत्रोः प्रतीकारमकुर्वाणस्य त्रैलोक्यविजयिनः रावणस्य महती निर्विण्णता व्यज्यते।] तथा च काव्यप्रकाशकारोक्तलक्षणस्यात्र प्रवृत्तिर्नास्ति, यतः अत्र विधेयाविमर्शदोषो वर्तते। विधेयस्य अविमर्शः, सिद्धस्य उद्देश्यत्वं साध्यस्य विधेयत्वं च दोषः, अनुवादमनुक्त्वैव ( अर्थात् उद्देश्यमनुक्त्वा ) न विधेयमुदीरयेदिति न्यायात् सर्वत्र उद्देशवचनं पूर्वं भवति। एवं च उच्छूनत्वमुद्दिश्य वृथात्वं विधीयते, परन्तु वृथाशब्दस्य पूर्वप्रयोगेणात्रविधेयाविमर्शदोषः।

उत्तरम्—अत्रादोषपदेन दोषसामान्याभाव एव विवक्षितः। न्यक्कारो ह्ययमेवेत्यादि पद्ये विधेयाविमर्शदोषसत्वेन काव्यप्रकाशकारमते काव्यत्वं नास्त्येव। यतः—नैतत्काव्यसामान्यस्य लक्षणम्, अपितु कृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशपर्यवसायि यशआदिप्रयोजकलोकोत्तरचमत्कारजनकवर्णनात्मकस्य काव्यविशेषस्य लक्षणम्। तत्र प्रमाणं तु काव्यप्रकाशकारस्य कारिकैव—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे॥

न हि दुष्टेषु काव्येषु–यश आदिप्रयोजकता सम्भाव्यते।

प्रतिप्रश्नः– तर्हि दुष्टं काव्यमिति व्यवहारः कथम्?

उत्तरम्—दुष्टो हेतुः इतिवत् तस्यौपचारिकत्वम्। तत्र हेतुपदेन हेत्वाभिमतस्य ग्रहणं न तु प्रत्यक्षहेतोः। न्यक्कारो ह्ययमेवेत्यादिपद्ये दोषसत्त्वात् काव्यप्रकाशकारमते न काव्यत्वमित्यनेन न कापि क्षतिः।

प्रतिप्रश्नः—सगुणाविति विशेषणमनुपपन्नम्, यतः गुणानां रसमात्रवृत्तित्वात्।

उत्तरम्—रसाभिव्यञ्जकत्वसम्बन्धेन सगुणाविति विशेषणमुपपन्नं भवति।

प्रतिप्रश्नः—तथापि अयुक्तम्, तथाहि—तयोः काव्यस्वरूपेणाभिमतयोः शब्दार्थयोः रसोऽस्ति न वा ? नास्ति चेत्, गुणवत्त्वमपि नास्ति। गुणानां तदन्वयव्यतिरेकानुविधेयत्वात्। अस्ति चेत्, कथं नोक्तं रसवन्ताविति विशेषणम् ?

उत्तरम्—( १ ) रसं विना गुणाः स्थातुं न शक्नुवन्ति, अतः, सगुणाविति पदेन सरसौ अर्थादायाति।

उत्तरम्—( २ ) अदोष इति वचनेन काव्यस्य हेयत्वाभावः प्रतिपाद्यते, किन्तु उपादेयता न सिद्ध्यति, अतएव सगुणौ इति विशेषणेन तत्सार्थकत्वं सिद्ध्यति।

प्रतिप्रश्नः—एवम् अस्फुटालङ्कारे काव्यप्रकाशकारेण उदाहृतम्, "यः कौमारहरः इति पद्यम्, तत्र सन्देहसङ्करालङ्कारस्य स्फुटत्वात् तदस्फुटालङ्कारस्य उदाहरणं न भवितुमर्हति।

उत्तरम्—विभावनाविशेषोक्त्योः अलङ्कारयोः अस्फुटत्वात्तयोः सन्देहसङ्करालङ्कारस्यापि अस्फुटत्वम्।

इत्थं प्रश्नोत्तरप्रतिप्रश्नप्रत्युत्तरादिप्रक्रियया प्रस्तुतेन विचारेण सुसिद्धं भवति यत् काव्यप्रकाशोक्तं काव्यलक्षणं निर्दुष्टं सर्वाङ्गसुन्दरञ्चास्ति।

—:०:—

# रसगङ्गाधरोक्तकाव्यलक्षणविचारः

पण्डितराजमतानुसारं काव्यस्य रमणीयार्थप्रतिपादकशब्दरूपस्य परिष्कृतानि लक्षणानि त्रिविधानि। तानि लक्षणानि पूर्व-पूर्व लक्षणविशिष्टानि, अर्थात् तेन एकं लक्षणं प्रदर्श्य तत्र कञ्चिद् दोषमुद्भाव्य अन्यत् लक्षणं विरचितम्; एवं पण्डितराजेन त्रीणि लक्षणानि विरचितानि सन्ति। यथा—

१—चमत्कारजनकभावनाविषयार्थप्रतिपादकशब्दत्वं काव्यत्वम्।

इदमेव सरलायां काव्यभाषायामित्थमस्ति–यथा—"रमणीयार्थप्रतिपादकः शब्दः काव्यम्"।

२—यत्प्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकं तत्त्वं काव्यत्वम्।

३—स्वविशिष्टचमत्कारजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारवत्त्वमेव काव्यत्वम्।

तत्र प्रथमे सरलगिरा प्रतिपादिते 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इत्यत्र विचार्यते—

का नाम रमणीयता? उच्यते—लोकोत्तराह्लादजनकज्ञानविषयता।

लोकोत्तरत्वञ्च आह्लादे स्थितः अनुभवसाक्षिको जातिविशेषः, यस्य अपरं नाम चमत्कारत्वमिति।

आह्लादे कारणं पुनः पुनरनुसन्धानात्मा भावनाविशेषः।

अत एव "गृहं ते सम्प्रदास्यामि", इत्यादि लौकिकसुखजनकेषु वाक्येषु नातिव्याप्तिः भवति, यतः एतेषु वाक्येषु सहृदयानुभवसाक्षिकं लोकोत्तरत्वं नास्ति।

इत्थमिदं काव्यपदार्थस्य परिष्कृतं लक्षणं भवति-चमत्कारजनकभावना-विषयार्थप्रतिपादकशब्दत्वं काव्यत्वम्। अत्र लक्षणे ज्ञानपदं विहाय भावना (ज्ञानधारा)—पदप्रयोगात् समूहालम्बनात्मकज्ञाने नातिव्याप्तिः; यतः उद्बोधकस्य पुनः पुनः आगमनं न भवति अतो 'शून्यं वासगृह' मित्यादि-रसव्यञ्जकैः शब्दै सह 'घट पटादि' रसाऽव्यञ्जकानां शब्दानां समुच्चारणेऽपि न भवति तेषां भावना इत्यर्थः।

समूहालम्बनात्मकज्ञानञ्च एकस्मिन् काले सहैव समुच्चारितानाम् अनेकेषां पदानां बोधः। अर्थात्—सार्थकैः शब्दैः सहैव निरर्थकानामप्युस्थितिः। अस्मिन् लक्षणे; अरुचिरस्ति यतः—

उद्बोधकसत्त्वे प्रतिबन्धकाभावे च सति समूहालम्बनात्मकज्ञानस्य भावना भविष्यति, ततश्च समूहालम्बनात्मकज्ञाने काव्यलक्षणस्य प्रवेशः; अतोऽत्र अतिव्याप्तिर्लक्षणदोषः।

अतो द्वितीयं लक्षणं तेन कृतम्—

यत्प्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकं तत्त्वं काव्यत्वमिति।

अस्यार्थः—

येन शब्देन प्रतिपादितस्य अर्थस्य विषयिणी भावना=यत्प्रतिपादितार्थ-विषयकभावना; तस्यां वर्तमानो धर्मो भावनात्वम्; चमत्कारजनिका भावना

भवति। अतो भावनायां चमत्कारजनकता तदवच्छेदकम्, यत्र यत्प्रतिपादितार्थविषयकभावनात्वं भवति तत्रैव काव्यत्वम्।

अतो न समूहालम्बनात्मके ज्ञानेऽतिव्याप्तिः, यतः 'शून्यं वासगृह'मित्यादि चमत्कारजनकात् काव्यशब्दात्, 'घटः' इत्यादि शब्दो भिन्नः तेन सहोच्चारितात् शब्दाच्च तदर्थविषयिणी जायमाना भावना यद्यपि एका तथापि काव्यशब्दप्रतिपादितार्थविषयकभावनात्वम् उदासीनशब्दप्रतिपादितार्थविषयकभावनात्वञ्च नैकम्, अपि तु भिन्नं वर्तते, अतः, चमत्कारजनकतावच्छेदकं नास्ति यत्प्रतिपादितार्थविषयकभावनात्वम्; अतो न समूहालम्बनात्मकज्ञानेऽतिव्याप्तिः।

किन्तु इदमपि लक्षणं न समीचीनम्। अत्रेयम् अरुचिः—यत्तदादिसर्वनामशब्दाः बुद्धिस्थस्य बोधकाः भवन्ति, न कस्यापि निश्चितपदार्थस्य। अतः ईदृशपद ( शब्द ) घटितं लक्षणं नानुगतम्, अपि तु अननुगतम् अस्ति; किञ्च काव्यत्वं चमत्कारजनकतावच्छेदकाभिन्नयत्प्रतिपादितार्थविषयकभावनात्वरूपम्; अतः, इदं लक्षणं गौरवदोषग्रस्तम्।

तस्मात् इदं तृतीयं लक्षणं तेन कृतम्—

स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारत्ववत्त्वं काव्यत्वमिति। इदं लक्षणं सकलविद्वज्जनसम्मतमिति बोध्यम्।

अस्यार्थः—

स्वं—चमत्कारत्वं, समवायसम्बन्धेन तद्विशिष्टः चमत्कारः तन्निरूपिता जनकता भावनायाम् ( ज्ञानधारायामित्यर्थः ) तादृशजनकतानिरूपिता विषयतासम्बन्धावच्छिन्ना अवच्छेदकता काव्यार्थे अर्थात् विषयतासम्बन्धेन काव्यार्थोऽपि भावनायां प्रकारः; अतः, सोऽपि ( काव्यार्थोऽपि ) भावनानिष्ठजनकतायाः अवच्छेदकः। तस्य काव्यार्थस्य प्रतिपादकः शब्दः, अतस्तादृशप्रतिपादकतासम्बन्धेन चमत्कारत्वं शब्दे चमत्कारत्ववत्त्वं काव्यत्वमिति।

अस्मिन् लक्षणे विशेषः—

सम्बन्धस्य स्वविशिष्टजनकतावच्छेदकरूपस्य अत्र निवेशेऽपि न गौरवदोषः; यतः लक्षणे सम्बन्धो न गण्य इति सर्वसम्मतः सिद्धान्तः।

———

# लक्षणाविचारः

लक्षणाविचारात् पूर्वं वृत्तिविषये किञ्चित् प्रस्तूयते यतो लक्षणापि वृत्तिरेव ।

वृत्तिस्वरूपं विद्वद्भिः इदं कथितमस्ति—"अर्थोपस्थितिहेतुः पदस्य पदार्थेन सह सम्बन्धो वृत्तिः" ।

इयं वृत्तिर्बहुविधा भवति

शक्तिः ( अभिधा ), लक्षणा, तात्पर्या, व्यञ्जना चेति ।

तत्र प्रथमा शक्तिरेव लक्षाणायाः आधारः इति विदुषां मतम् ।

शक्तेः लक्षणमिदम्—

शक्त्याख्यः शब्दस्यार्थगतोऽर्थस्य शब्दगतः सम्बन्धविशेषोऽभिधा । अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरसङ्केतः शक्तिः ।

अभिधानुगामिनी वृत्तिः लक्षणा निरूप्यते—

"शक्यसम्बन्धो लक्षणा" इति पण्डितराजः ।

अस्यायमर्थः—

यत्किञ्चिच्छक्यार्थप्रतियोगिको यत्किञ्चिदर्थानुयोगिकः सम्बन्धविशेषो लक्षणा ।

'शक्यादशक्योपस्थितिर्लक्षणा' इत्यन्ये ।

काव्यप्रकाशकारमते—

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया" ॥

इदमत्र बोद्धव्यम्—

लक्षणा वास्तविकरूपेण अर्थनिष्ठा भवति, किन्तु आरोपिता सती शब्दव्यापार इति कथ्यते ।

सम्प्रति तस्याः बीजस्य विषये विचारः क्रियते—

तस्याश्चार्थोपस्थापकत्वे मुख्यार्थतावच्छेदके तात्पर्यविषयान्वयितावच्छेदकतायाः अभावो न तन्त्रम् , शक्यतावच्छेदकरूपेण लक्ष्यभानस्य स्वीकारात् ।

लक्षणायाः किं बीजमिति विषये मतद्वयं वर्तते—

तत्र प्रथमं मतं विचार्यते—

‘‘गङ्गायां घोषः’’ इत्यत्र मुख्यार्थतावच्छेदके = मुख्यार्थः—भगीरथरथखातावच्छिन्नः प्रवाहः, तदवच्छेदकम् प्रवाहत्वम् तस्मिन् —प्रवाहत्वे

तात्पर्यविषयान्वयितावच्छेदकतायाः = तात्पर्यविषयीभूतो ऽन्वयः-आधाराधेयभावरूपः, तदन्वयि तटम्, तात्पर्यविषयान्वयिता तटे, तस्याः अवच्छेदकम् तटत्वम्, तस्मिन् ( तटत्वे ) तात्पर्यविषयान्वयितावच्छेदकता, तदभावः मुख्यार्थतावच्छेदके प्रवाहत्वे वर्तते, अतो लक्षणा उचितैव ।

इति चेत् न ।

‘गङ्गायां घोषः’ इत्यत्र गङ्गात्वेन (प्रवाहत्वेन) रूपेणैव तटस्य उपस्थितिं मन्यन्ते कोविदाः ।

यतः तटं पञ्च-दशक्रोशपर्यन्तं भवति किन्तु शैत्यपावनत्वादयो गुणाः तावति न तिष्ठन्ति, अतो यावत्कालपर्यन्तं तटस्य उपस्थितिः गङ्गात्वेन रूपेण न भविष्यति तावत्कालपर्यन्तं शैत्यपावनत्वादिप्रतीतिरेव दुःशका, इति विवेकः ।

अतः—

तात्पर्यविषयान्वये मुख्यार्थतावच्छेदकरूपेण मुख्यार्थप्रतियोगिकतायाः अभावो रूढिप्रयोजनयोरन्यतरच्च तन्त्रम्’’

अस्यायमर्थः-तात्पर्यविषयीभूतेऽन्वये मुख्यार्थतावच्छेदकरूपेण मुख्यार्थप्रतियोगिकता न तिष्ठेत् अर्थात् तात्पर्यविषयीभूतोऽन्वयो मुख्यार्थः प्रतियोगी यस्य-एतादृशो न भवेत् ।

यथा गङ्गायां घोषः इत्यत्र तात्पर्यविषयीभूतोऽन्वयः ( सम्बन्धः ) आधाराधेयभावरूपः, तस्मिन् प्रवाहत्वेन रूपेण ( मुख्यार्थतावच्छेदकरूपेण ) प्रवाहे नास्ति, प्रवाहे घोषाधारतायाः असम्भावितत्वात् । प्रतियोगिकत्वं

अतः अयमेव पक्षो मान्यः—तात्पर्यविषयान्वये मुख्यार्थतावच्छेदकरूपेण मुख्यार्थप्रतियोगिकताया अभावो लक्षणायाः बीजमिति ।

किञ्च—रूढिप्रयोजनयोरन्यतरद् अपि लक्षणायाः बीजम् ।

इदमत्रावधेयम्—मुख्यार्थान्वयानुपपत्तिर्न लक्षणाबीजम्, अपि तु तात्पर्यानुपपत्तिरेव । अन्यथा ‘काकेभ्यो दधि रक्ष्यताम्’ इत्यत्र लक्षणा न भविष्यति ।

अतः, अत्र न केवलं काकापादानकमेव दधिरक्षणमपेक्षितम्, किन्तु दध्युपघातकापादानकम्। अत्र काकादपि दधिरक्षणमपेक्षितम् अन्यतदुपघातकाद् बिडालादिकादपि।

ततश्च मुख्यार्थान्वयस्य = काकत्वेन काकस्यापि अपादानत्वेन इष्टत्वात् मुख्यार्थबाधो नास्ति, किन्तु तात्पर्यबाध एव उपयुज्यते। अतः, सुसिद्धमिदं यल्लक्षणायाः बीजं तात्पर्यानुपपत्तिरेव, नान्वयानुपपत्तिरिति।

लक्षणायां शक्यसम्बन्धो नैकविधो भवति। यथा–'गङ्गायां घोष' इत्यत्र सामीप्यम्। विपरीतलक्षणायां विरोधः, आयुर्घृतम् इत्यत्र कारणत्वमित्यादि।

इयं लक्षणा पण्डितराजमते प्रथमं द्विविधा—

निरूढा प्रयोजनवती च।

प्रयोजनवती द्विविधा—गौणी शुद्धा च।

गौणी—सारोपा साध्यवसाना च।

शुद्धा–जहत्स्वार्था, अजहत्स्वार्था, सारोपा, साध्यवसाना चेति चतुर्विधा।

एवं सप्तविधा।

केचित्तु—

निरूढलक्षणायाः गौणीत्वशुद्धात्वाभ्यां द्वैविध्यमामनन्ति।

मम्मटाचार्यः—त्रयोदशविधां लक्षणामङ्गीकरोति इति विदुषां मतम्।

साहित्यदर्पणकारस्तु अशीतिप्रकारां लक्षणां स्वीकरोति।

सम्प्रति पण्डितराजमते गणितानां भेदानां लक्षणान्युदाहरणानि च प्रस्तूयन्ते—

१—निरूढा—अनादिप्रयोगप्रवाहो रूढिः।

उदाहरणं यथा—

अनुकूलप्रतिकूलेत्यादि, नीलादयश्च।

२—प्रयोजनवती गौणी सारोपा—व्यङ्ग्यमेव प्रयोजनम्, तेन सहिता प्रयोजनवती। गुणादागता (सादृश्यसम्बन्धादित्यर्थः) गौणी। विषयविषयिणोः पृथगुपादानमारोपः तेन सहिता सारोपा—अस्याः उदाहरणं यथा—

'मुखं चन्द्रः'

इयमेव रूपकालङ्कारस्य बीजम्।

३—प्रयोजनवती गौणी साध्यवसाना—

पृथग् अनिर्दिष्टे विषये विषयिणः अभेदः अध्यवसानम् तेन सहिता साध्यवसाना—

उदाहरणम्—

'चन्द्रो विराजते' इति । इयमेवातिशयोक्तेर्बीजम् ।

४—प्रयोजवती शुद्धा जहत्स्वार्था—त्यक्तः स्वस्य सङ्केतितार्थो यस्यां शब्देन, सा । उदाहरणम्—

'गङ्गायां घोषः'

इयमेवान्यैः लक्षणलक्षणेत्युच्यते ।

५—प्रयोजनवती शुद्धा अजहत्स्वार्था—

'अजहन्—अपरित्यजन् स्वसङ्केतितमर्थं यस्यां शब्दः, सा—

उदाहरणम्—

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥

अस्मिन् पद्ये—

'रामोऽस्मि सर्वं सहे' इत्यत्र रामशब्दः ।

६—प्रयोजनवती शुद्धा सारोपा—आयुर्घृतम् ।

७—साध्यवसाना—आयुरेवेदम् ।

इत्थमियं लक्षणा लक्षणोदाहरणविवेचनपुरस्सरं निरूपिता ।

—: ० :—

## व्यञ्जनाविचारः

विरतास्वभिधाद्यासु ययान्योऽर्थः प्रतीयते ।
सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ॥

इह कविकुलकाव्यकलायां जेगीयमानवैभवा अस्ति काचित् शब्दवृत्तिः व्यञ्जना नाम ।

'किमेषा वृत्तिः शाब्दबोधव्यापारे नियतमपेक्षणीया उत शक्तिलक्षण-तात्पर्यादिभिः एव कार्यं सम्पादनीयमिति विचिकित्सायां केचन सङ्कुचितदृशः प्रत्यवतिष्ठन्ते।

अत एव एतेषां भ्रान्तानां अन्धतमसमुन्मूलयितुं प्राह मम्मटाचार्यः—

"स्याद् वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा"।

अनेन सिध्यति यत् व्यञ्जनाव्यापाराङ्गीकारं विना सर्वतः शब्दप्रसून-परिमण्डितोऽपि अवकेशी कवेः कल्पनातरुः।

सम्प्रति सहृदयहृदर्यविहारिण्याः अस्याः विषये पूर्वपक्षानुपस्थाप्य तान् खण्डयित्वा च इमां खण्डयितुकामान् वाग्दण्डेन दण्डयित्वा अखण्डितायाः नायिकायाः इव अस्याः वैशिष्ट्यं प्रतिपादयिष्यते।

तत्र केचित् कथयन्ति—'सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः अर्थात् अभिधाव्यापारेणैव सर्वं कार्यं सम्पत्स्यते, नास्ति काप्यावश्यकता व्यञ्जना-व्यापारस्य। योऽयं व्यङ्ग्योऽर्थः इति प्रतिपाद्यते कैश्चित्सोऽपि अभिधेय एव।

तदेतत् सर्वथानुचितम्—

वाच्यात् अर्थात् व्यङ्ग्योऽर्थो भिन्न इति सकलसहृदयसम्मतं प्रमाण-प्रतिपन्नञ्च। तथाहि—यदि शब्दश्रवणानन्तरं सकलार्थबोधिनी अभिधैव इत्युच्यते तदा 'ब्राह्मण! पुत्रस्ते जातः कन्या ते गर्भिणी' इत्यादि वाक्येभ्यो व्यङ्ग्यानां हर्षशोकादीनां वाच्यत्वापत्तिः स्यात्, विद्वद्भिस्तु–एते सङ्केतितत्वा-भावात् 'हर्षादयः न वाच्याः' इत्यभ्युपगम्यते।

किञ्च दोषाणां नित्यत्वानित्यत्वरूपा व्यवस्था अनुपपन्ना स्यात्। यतः श्रुतिकट्वादयो दोषाः 'उद्वर्तयति उल्लोटयति शयने कह्यपि मोट्टायित-यति नो परिघट्टयति' इत्यादौ शृङ्गार रसस्य विरोधिनः सन्तोऽपि अन्यत्र वीरादौ गुणतां भजन्ते।

वाच्योऽर्थः सर्वान् प्रति साधारण एव, तत्र सहृदयानामसहृदयानाञ्च साधारणी एव बोधविषयता; किन्तु "गतोऽस्तमर्कः" इत्यादिवाक्योच्चारणानन्तरं व्यङ्ग्योऽर्थः तत्तद्वक्तृवाच्यप्रबन्धानामौचित्येन बहुविधत्वं भजते।

कुत्रचित् 'निःशेषच्युतचन्दन' मित्यादौ वाच्योऽर्थो निषेधरूपः, किन्तु व्यङ्ग्योऽर्थो विधिरूपः (तदन्तिकं गतासि इति) परिस्फुरति।

क्वचित् वाच्यार्थो निन्दारूपः, किन्तु व्यङ्ग्योऽर्थः स्तुतिरूपः इति सर्वथा व्यङ्ग्यं वाच्याद् भिन्नमिति निश्चितम ।

अतः पूर्वपश्चाद्भावेन वाच्यव्यङ्ग्ययोः समयस्य, 'गतोऽस्तमर्क' इत्यादौ सङ्ख्यायाः—

कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्मघ्रायिणि वारितवामे सहस्वेदानीम् ॥

इत्यादौ विषयस्य च भेदात् वाच्यं भिन्नम्—व्यङ्ग्यञ्च भिन्नमिति सिद्धम् । अत्र रुचिरमाह दर्पणकारः ।

बोद्धृस्वरूपसङ्ख्यानिमित्तकार्यप्रतीतिकालानाम् ।
आश्रयविषयादीनां भेदाद्भिन्नोऽभिधेयतो व्यङ्ग्यः ॥

अन्ये प्राहुः—

लक्ष्यार्थ एव व्यङ्ग्यार्थः । यतो वस्तुतः न कोऽपि व्यङ्ग्योऽर्थः, लक्ष्यार्थ एव बुधजनसम्मतः, अतो नास्ति काचिद् व्यञ्जना नाम्नी वृत्तिः, लक्षणयैव गतार्थत्वादिति ।

अत्र विचार्यते—

'अभिधा पुच्छभूता लक्षणा' इति सर्वमान्यं कथनम्, व्यञ्जना न तथा इति व्यञ्जना लक्षणातो भिन्ना एव ।

लक्षणायै मुख्यार्थबाधः सर्वथा अपेक्षितः, व्यञ्जनायै नायं कदाचिदपि अपेक्षितः इति विदुषां नास्ति अपरिचितं कथनम् ।

लक्षणा प्रयोजनम् अपेक्षते, तत्प्रयोजनमेव अस्माकं व्यङ्ग्यम् इति लक्ष्यार्थात् भिन्नो व्यङ्ग्योऽर्थः ।

लक्षणा मुख्यार्थेन सह सम्बद्धमेवार्थं लक्षयति, व्यञ्जना तु क्वचिन्मुख्यार्थसम्बद्धम्, क्वचिदसम्बद्धम्, क्वचित्सम्बद्धसम्बद्धञ्चार्थं व्यञ्जयति अतो लक्षणातो व्यञ्जनावृत्तिर्भिन्नैव इति सिद्धम् ।

अपरेऽनुमानवादिनः कथयन्ति—

लिङ्गाल्लिङ्गिनो ज्ञानमनुमानम्; अर्थात् प्रकृते व्यञ्जकाद् व्यङ्ग्यस्य ज्ञानमनुमानमेव न किमपि नूतनं व्यङ्ग्यव्यञ्जकरूपम् ।

यथा–'भ्रम धार्मिक! विश्वस्त' इत्यादौ गृहे श्वनिवृत्त्या विहितं धार्मिकभ्रमणं गोदावरीतीरे सिंहसत्त्वात् तस्य भ्रमणराहित्यमनुमापयति इति । किञ्च

वाच्यादसम्बद्धोऽर्थो न प्रतीयते, अन्यथा अतिप्रसङ्गः स्यात्, अतो बोद्ध्य-बोधकयोरर्थयोः लिङ्गलिङ्गिरूपः सम्बन्धः कल्पनीयः, अतोऽनुमेयात् न भिन्नः कश्चिद् व्यङ्ग्योऽर्थः इति।

अत्रापि विचार्यते—

यदुच्यते 'भ्रम धार्मिक' इत्यादौ अनुमानमिति; तत्र हेतुः अनैकान्तिकः इति हेत्वाभासः; भीरोरपि गुरोर्निदेशेन प्रियानुरागेण वा सिंहस्थितिविशिष्टे तीरे गमनस्य सम्भवात्।

अनुमाने हेतोर्निर्दुष्टत्वमपेक्षितं भवति, एतद्विपरीतं व्यञ्जनायां हेतोराभासत्वं साधकमेव भवति न कदापि बाधकम्। पूर्वत एव अर्थस्य अपरिज्ञानं चमत्कारमूलम्। निःशेषच्युतेत्यादि पद्ये वापीस्नाननिधुवनरूपोभयपक्ष-साधकस्य वाच्यार्थस्य व्यङ्ग्यार्थसाधकत्वमस्ति।

किञ्च आर्थीव्यञ्जनास्थलेऽनुमितिसामग्र्याः सर्वथा असम्भवात् व्यञ्जना अनुमानात् भिन्ना इति सिद्धम्।

ये च व्यञ्जनामर्थापत्तिप्रमाणे गतार्थयन्ति, तेऽपि 'देवानां प्रिया एव' इति मम्मटाचार्यो युक्तमाह।

यतो 'जीवति चात्र गोष्ठ्यामविद्यमानश्चैत्रः, इत्यादिरूपा अर्थापत्तिः नानुमानाद् भिन्ना, अतो यादृशी दुःस्थितिः अनुमानवादिनां सैव एतेषामपि इति अर्थापत्तितोऽपि भिन्नैव व्यञ्जना इति सिद्धम्।

सूचनबुद्धेरपि अनुमानरूपतया व्यञ्जनारूपत्वं नास्ति।

तस्मात्—तुरीया व्यञ्जना नाम्नी वृत्तिरवश्यं स्वीकार्या—

तथा चाह दर्पणकारः—

**सा चेयं व्यञ्जना नाम वृत्तिरित्युच्यते बुधैः।**
**रसव्यक्तौ पुनर्वृत्तिं रसनाख्यां परे विदुः॥ इति।**

आलङ्कारिकाणां नये लक्षणाया व्यङ्ग्यार्थे कियानुपयोगः? इत्यधुना विचार्यते—

शब्दबोधोपयोगिनीषु वृत्तिषु लक्षणा तावत् द्वितीया शब्दवृत्तिरिति प्रसिद्धतरम्। शब्देभ्यो जायमाना अर्थप्रतीतिः सामान्यतो द्विविधा। निर्बाधा सबाधा चेति। निर्बाधतया अर्थप्रतीतिः सर्वजनसंवेदनसिद्धा अभिधाव्यापारस्य विषयः। अभिधाव्यापारश्च शक्तिग्रहसापेक्षः। शक्तिग्रहेण शब्दानां वाच्यवाच-

कभावो नियम्यते। अन्यथा घटादिशब्देभ्यो भाषान्तरेषु जायमाना भिन्नार्थ-प्रतीतिः अपि बोधविषयतां प्राप्नुयात्।

अर्थप्रतीतेर्द्वितीयः प्रकारो लक्षणावृत्तेः विषयः। लक्षणमुपलक्षणञ्चेति पर्यायौ। अर्थात्—यत्र वाच्यार्थोपलक्षितः व्यवहितसङ्केतगोचरोऽर्थः प्रतीयते सा लक्षणा। सा च मतभेदेन द्विविधा उच्यते। शक्यतावच्छेदकारोपरूपा शक्य-सम्बन्धरूपा वा। तत्र प्राचीनाः अभिधाव्यापारस्यैव प्रामुख्यमङ्गीकुर्वाणाः तदतिरिक्तानां व्यापाराणां तज्जन्यत्वाविशेषात् तदङ्गतामेव परिकल्पयन्तो लक्षणामपि अभिधापुच्छभूतामेवाहुः। तेषामयमाशयः—अभिधैव मुख्यः शब्दव्यापारः। सः द्विशाखतां भजते–प्रसिद्धार्थविषयोऽप्रसिद्धार्थविषयश्चेति। अतो, न लक्षणा नाम काचिदन्या शब्दशक्तिः।

लक्षणाख्या शब्दशक्तिः सुतरामुपयोगिनीति न केषामपि विप्रतिपत्तिः। अनादिप्रयोगपरम्परया इदानीन्तनप्रयोजनवशेन वा बाध्यमानार्थव्यवहारो लौकिकेषु कविक्षुण्णेषु वा प्रयोगेषु बाहुल्येन उपलभ्यते एव। तद्बोधाय शब्दशक्तिरियमवश्यमङ्गीकरणीया।

मम्मटाद्यनुसारेण मुख्यार्थबाध-तद्योग-रूढिप्रयोजनान्यतरवत्त्वरूपे हेतौ सत्येव लक्षणाया अवतारः। एतदन्यतमवैकल्ये तु न शब्दशक्तेरस्याः सम्यक् प्रयोगः। अत एव मुख्यार्थबाधादित्रयं हेतुरिति एकवचनं प्रायुङ्क्त मम्मटः। मुख्यार्थबाधश्च द्विधा—अन्वयानुपपत्तिमुखेन तात्पर्यानुपपत्तिमुखेन च। अत एव काकेभ्यो दधि रक्ष्यताम् इत्यादौ अन्वयानुपपत्त्यभावे अपि तात्पर्यबाधात् लक्षणा सङ्गच्छते। 'काक'शब्देन दध्युपघातकसामान्यस्य लक्षणा-विषयत्वात्, इति पूर्वमेव प्रतिपादितमास्ते लक्षणानिरूपणप्रसङ्गे।

ननु 'निःशेषच्युतचन्दनमित्यादौ। 'भ्रमधार्मिकविश्वस्तः' इत्यादौ च अस्त्येव मुख्यार्थबाधः, न गतासि, गतासि, भ्रम, मा भ्रम इत्याद्यर्थबोधवशेन बाधितार्थप्रतीतेः स्फुटत्वात्।

मैवम्, यत्र वाक्यघटकानां पदार्थानां अन्वयो बुभूषन्नेव बाध्यते, अर्थात्—वाक्यार्थान्वयबोधसमकालिकी यत्र बाधप्रतीतिः तत्रैव लक्षणाया अवसरः। पूर्वोक्तयोरुदाहरणयोः वाक्यार्थबोधे बाधाभावान्न लक्षणाप्रसङ्गः, किन्तु सः व्यञ्जनाया एव विषयः। अत एव निःशेषच्युतचन्दनमित्यत्र लक्षणा-मूलां व्यञ्जनां प्रतिपादयत् दर्पणकारोऽपि न सूक्ष्मदर्शीति प्रतिभाति, अन्यथा तस्य पद्यस्य ध्वनित्वव्याघातात्।

(३) अपरञ्च—मुख्यार्थबाधमात्रेण न लक्षणायाः स्वैरप्रसरप्रसङ्गः। निमित्तभूतयोः रूढिप्रयोजनयोः एकतरस्य अभावे नेयार्थादीनां दोषाणामवसरः।

अतएव तत्रेयं व्युत्पत्तिः—रूढिप्रयोजनाभावाद् वक्त्रा स्वेच्छया कथञ्चिदाकृष्य नीयतेऽर्थो यत्र तन्नेयार्थमिति ।

( २ ) अन्यच्च—लक्षणायां शक्यार्थसम्बन्धं विना न द्वितीयार्थप्रतीतिः । 'गङ्गायां घोषः' इत्यादौ मुख्यार्थस्य प्रवाहादेः सम्बन्धं विना लिलक्षयिषितस्य तटादेर्न प्रतीतिः । अत एव तार्किकाः शक्यसम्बन्धमेव लक्षणामामनन्ति । तत्र प्रवाहत्वप्रकारकतीरविशेष्यकशाब्दबोधस्य अनुभवगोचरत्वात् । मुख्यार्थसम्बन्ध एव लक्षणातो व्यञ्जनावृत्तिं व्यावर्तयितमीष्टे । न हि 'गङ्गायां घोषः' इत्यादौ गङ्गासम्बन्धनिरपेक्षस्य यमुनातटादेः प्रतीतिः कदापि सम्भवतीति वाच्यवाचकभावसम्बद्धता लक्षणायाः नियता । 'गतोऽस्तमर्कः' इत्यादिशब्दप्रयोगात् परस्परविलक्षणानां तत्तद्वक्तृबोद्धव्यादिभेदग्राह्याणां शतशः सहस्रशो वा व्यङ्ग्यार्थानां परिस्फूर्तिः अनुभवसिद्धा इति मुख्यार्थसम्बन्धविचारः सीमानं विभनक्ति । अत एव, व्यञ्जनालक्षणे नागेशोऽपि–मुख्यार्थसम्बद्धासम्बद्धसाधारण इत्यादि आह । मम्मटोऽपि–लक्षणाप्रकरणे–तत्त्वेन प्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसम्प्रत्ययः—इत्याह ।

इयं लक्षणा गुणवृत्तिरिति भक्तिरिति वा प्राचीनैराख्यायते । लक्षणाशब्दव्यवहारः प्राचीनानां सादृश्यातिरिक्तसम्बन्धमूलकशुद्धलक्षणाविषयः । लक्षणायाः स्थले-स्थले भूयसी समुपयोगिता काव्यतन्त्रविदां शास्त्रव्याख्यानोपयोगिनी । लौकिकसाधारणवाग्व्यवहारापेक्षया लाक्षणिकवृत्त्या व्यवह्रियमाणाः शब्दाः कवीनां सुतरामुपकारकाः इति दण्डिप्रभृतीनां प्राचां सम्मतिः ।

तथाहि—

निष्ठ्यूतोद्गीर्णवान्तादिगौणवृत्तिव्यपाश्रयम् ।
अतिसुन्दरमन्यत्तु ग्राम्यकक्षां विगाहते ॥

ध्वनिप्रस्थापनाचार्येण श्रीमता आनन्दवर्धनेनापि ध्वनेः प्रथमतरं निर्णीतयोर्भेदयोर्मध्ये अविवक्षितवाच्यस्य परिगणनात् लक्षणोपयोगः स्फुटः एव । तदीयोऽयमाशयः—ध्वनिमार्गो लक्षणाश्रयोऽपि भवति, न तु लक्षणैकाश्रयः । किञ्च लक्षणायां निमित्तभूतस्य प्रयोजनस्य गूढागूढत्वेन परिगणने यत् अगूढं प्रयोजनं तत् सहृदयासहृदयोभयसंवेद्यत्वात् न ध्वनिमार्गानुयायि, किन्तु साधारणचमत्कारावहम् । तस्यापि कविजनानुगृहीततया सुतरामुपयोगः केन वा वारणीयः ?

तथा च कविप्रयोगाः—

'उपदिशति कामिनीनां यौवनमद एव ललितानि ।'

'...................................वदति बिसिनी पत्रशयनम् ॥'

एवंविधेषु उदाहरणेषु प्रधानतया ध्वन्यमानस्य अर्थस्य अभावेऽपि लाक्षणिकस्याप्यर्थस्य काव्यमार्गनिर्वाहकत्वमङ्गीकर्तव्यमेव । अपि च ध्वनिभेदेषु अलङ्कारप्रभेदेषु वा लक्षणावृत्त्याश्रयेणैव क्वचित्क्वचित् चमत्कारोपलब्धिः प्रमाणसिद्धा । रूपकातिशयोक्त्योरलङ्कारयोः सारोपासाध्यवसानालक्षणा-प्रयुक्तत्वमपरिहार्यम् । सेयमतिशयोक्तिः वक्रोक्तिजीवितकारमते सर्वालङ्कार-बीजभूता इति लक्षणावृत्तेः अलङ्कारसामान्यकुक्षिनिवेशः शक्यः कल्पयितुम् । अलङ्कारमार्गे लक्षणायाः प्रमाणसिद्धं स्थानं केन वा अपह्नूयते ? एवम्, आचार्यदण्डिप्रभृतिभिः उपमालङ्कारप्रकारे सादृश्यप्रतिपादकशब्दविचारावसरे नानाविधानां लाक्षणिकानां शब्दानां सङ्ग्रहः प्रदर्शितः ।

व्यञ्जनायाः परिष्कृतं नागेशभट्टकृतं समग्रं लक्षणमिदमस्ति—मुख्यार्थ-बाधग्रहनिरपेक्षबोधजनको मुख्यार्थसम्बद्धासम्बद्धसाधारणः प्रसिद्धाप्रसिद्धार्थ-विषयको वक्त्रादिवैशिष्ट्यप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जना ।

इयञ्च—

शाब्दी—आर्थी भेदेन द्विविधा । तत्र—

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
एकस्यान्यार्थधीहेतुर्व्यञ्जना साभिधाश्रया ॥
लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम् ।
यया प्रत्याय्यते सा स्याद् व्यञ्जना लक्षणाश्रया ॥

आर्थी विषये—

वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ।
प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम् ।
याऽर्थस्यान्यार्थधीहेतुर्व्यञ्जना सार्थसम्भवा ॥

व्यञ्जकः शब्दोऽर्थश्च भवति । तदेवाह दर्पणकारः—

शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः ।
एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता ॥

व्यञ्जनाया उदाहरणम्—

पश्य निश्चलनिस्पन्दा बिसिनीपत्रे राजते बलाका ।
निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ॥

अत्र—बलाकायाः निःस्पन्दत्वेन विश्वस्तत्वम्, तेनास्य देशस्य विजनत्वम्, अतः, सङ्केतस्थानमेतदिति व्यज्यते ।

अबलानां श्रियं हृत्वा वारिवाहैः सहानिशम् ।
तिष्ठन्ति चपला यत्र स कालः प्रत्युपस्थितः ॥

इत्यादौ अशक्तानां द्रव्यमपहृत्य जलवाहकैः पुरुषैः सह पुंश्चल्यो रमन्त इत्यर्थान्तरं अनयैव बोध्यते ।

अतः, सुनिश्चितमिदं यदेतस्याः साम्राज्यं न केवलमालङ्कारिकगृहाङ्गणमात्रपरिच्छिन्नम्, अपि तु इयं भगवती व्यञ्जनामहाराज्ञी अशेषमपि शास्त्रसाम्राज्यमुपभुङ्क्ते ।

किम्बहुना, वेदेऽपि 'द्वासुपर्णा सयुजा सखाया' इत्यादौ अपि इयमेव शरणम् ।

अत एव शबरस्वामिभिः—'एवमयं पुरुषो वेद' इति भवति प्रत्ययः, न तु एवमयमर्थः—इति वदद्भिः प्रतीयमानस्यार्थस्य माहात्म्यं स्फुटीकृतमेव ।

तस्मादियं सर्वमान्या व्यञ्जना खञ्जलोचना ।
रञ्जयन्ती सहृदयान् सरसा शोभतेतमाम् ॥

—०—

## साधारणीकरणविचारः

किं नाम साधारणीकरणम् ? इति जिज्ञासायामुच्यते—रसास्वादप्रक्रियायां प्राणायितं साधारणीकरणं नाम कश्चिद् व्यापारविशेषः । स च सहृदयहृदयप्रमाणसिद्धः । यद्यपि अनुभवकाले सहृदयविशेषानुभवविषयत्वेऽपि समानाकारायाश्चित्तवृत्तेः सकलसहृदयसम्मतत्वात् विसंवादाभावात् न तत्र अप्रामाण्यशङ्का काचित् । यदुच्यते मम्मटेन—सकलसहृदयसंवादभाजा इति । तत्र

असाधारणः साधारणः क्रियते इति अभूततद्भावार्थकच्विप्रत्ययलब्धया व्युत्पत्त्या लब्धमिदं यत् काव्यनाट्यगता नायकादयः तद्द्रष्टा सामाजिकश्च पृथक् सिद्धाः असाधारणाः पदार्थाः यस्य व्यापारस्य महिम्ना साधारणीक्रियन्ते स एव असौ व्यापारः।

ननु अन्यनिष्ठानां रत्यादिभावानां साधारणीकरणं कथञ्चिदुपपद्यतां नाम रामादिगतानां समुद्रलङ्घनाद्युत्साहानां इदानीन्तनसामाजिकाद्युत्साहैः सह कथमभेदोपपादनं सम्भवति इति।

इत्थं न आशङ्कनीयम्। उत्तरोत्तरं तादात्म्यबुद्धौ दृढतरीभवन्त्यां सङ्कोचांशस्य विगलनात् तथाविधनायकादिगतैः उत्साहाद्यैरपि साधारणीकरणं सम्भवत्येव। अन्यथानुपपत्तिश्चात्र प्रमाणम्। वीररसप्रधानतथाविधनाटकादिदर्शने सामाजिकानामभिनिवेशस्तदास्वादं विना अनुपपन्नः।

आस्वादश्च साधारणीकरणायत्तः। यदुक्तम्

**प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते।**

**उत्साहादिसमुद्बोधः साधारण्याभिमानतः।**

**नृणामपि समुद्रादिलङ्घनादौ न दुष्यति॥** इत्यादि।

तत्र अयं क्रमः। प्रथमतो सुहृदाद्यनुरोधात् नाट्यमण्डपप्रविष्टस्य सहृदयस्य सङ्गीताद्युपरञ्जितचेतसः पात्रेषु अयं नटः इयं नटीत्याद्याकारा बुद्धिः, तदनु समुचितवेशविन्यासभाषाकौशलेन ततोऽप्युपरञ्जितचेतसः अयं दुष्यन्तः इयं शकुन्तला वा रामः सीता वा इति बुद्धिः, तदनु तैस्तैः रसानुकूलैर्भावैर्भावितचेतसः शृङ्गारादौ अयं नायकः इयं नायिका, वीरादौ अयं नायकः अयं प्रतिनायक इति वा बुद्धिः, तदनु स्थायिनि भावे स्वानुकूलसामग्रीलब्धपरिपोषे स्त्रीपुंसाद्युपाधिविशेषविगलनान्तरं रसात्मतामापन्ने आनन्दः आनन्दः इत्याकारिका धारावाहिनी अखण्डाकारा चित्तवृत्तिः। सा च शब्दैर्व्याख्यातुमशक्या। यदुक्तम्—स्वाकारवदभिन्नेनायमास्वाद्यते रसः।

अयमाशयः—अस्यामवस्थायां ज्ञातृज्ञानज्ञेयाख्यानां त्रयाणामपि पदार्थानां एकवृत्तिविषयत्वेन—अखण्डत्वम्। इदमेव च रसस्य अलौकिकत्वम्।

'इदं रसविषयकं ज्ञानं भ्रमः प्रमा वा' इति विचारे न प्रमा लौकिकयथार्थज्ञानान्तरवत् प्रतीतिगोचरत्वाभावात्, नापि भ्रमः औत्तरकालिकमिथ्याबुद्धिनाश्यत्वाभावात्। अपितु अनिर्वचनीयमेव ज्ञानं भ्रमाप्रमात्मकं वा।

एतावता विचारेण इदं प्रमाणितं भवति यत् 'साधारणीकरणं व्यापार-विशेषः, स च रसानुभवे उपयोगी इति।

——:०:——

## रसविचारः

इदानीं सर्वैरपि अभिलषणीयस्य परमानन्दसहोदरस्य रसस्य स्वरूपं विचार्यते—

साहित्यदर्पणकारः कथयति—

**विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा।**
**रसतामेति रत्यादिस्थायिभावः सचेतसाम्॥**

अस्य कथनस्य अभिप्रायः अयम्—

रामादिरूपविभावेन स्वेदोद्गमादिरूपानुभावेन हर्षादिरूपसञ्चारिणा च व्यक्तः दध्यादिन्यायेन रूपान्तरपरिणतः रत्यादिः स्थायिभावः सहृदयानां कृते रसरूपतां प्राप्नोति। यथा पूर्वसिद्धो घटो दीपेन व्यज्यते, तथा नायं व्यज्यते, अपि तु परिणतो भवति।

एतदेवाह आचार्यभरतः—

विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिरिति।

अस्य सूत्रस्य व्याख्यानं तैस्तैः साम्प्रदायिकैः स्वरीत्या कृतम्। तेषां मध्ये प्रमुखाः सन्ति भट्टलोल्लटशङ्कुकभट्टनायकाभिनवगुप्तपादाः। ते क्रमेण मीमांसान्यायसाङ्ख्यसाहित्यसम्प्रदायानुयायिनः सन्ति।

तेषां व्याख्यानं क्रमेण विचार्यते। तत्रादौ भट्टलोल्लटमहोदयस्य मतं विचार्यते—

सः कथयति—

विभावानुभावव्यभिचारिणाम्—उत्पाद्योत्पादकभावरूपात् संयोगाद् रसस्य उत्पत्तिः भवति।

अयं मीमांसकः वर्तते। मीमांसका मन्यन्ते—यद् वस्तु यदर्थं भवति, तत् तेनैव निर्दिश्यते यथा 'यूपाय दारु—'यूपदारु' उच्यते। एवमेव रसः प्रधानरूपेण रामादौ अनुकार्ये तिष्ठति, परन्तु तदनुकारिणि नटे सः आरोपितो भवति। नटोऽपि स्वनाट्यकलया रामादीन् अनुकुर्वन् राम एव प्रतिभाति। सामाजिकैः तत्र 'राम एव अयम्' इत्यादिव्यवहारः क्रियते। सः रसः नटे गौणवृत्त्या प्रतीय-

मानः सामाजिकान् चमत्करोति। अस्य मतेन रसस्य विभावैः सह उत्पाद्योत्पादकभावः सम्बन्धः भवति, अनुभावैः सह प्रतीत्यप्रतीतिजनकभावः सम्बन्धः भवति तथा सञ्चारिभिः सह पोष्यपोषकभावः सम्बन्धः भवति।

इदानीमस्मिन् व्याख्याने अरुचेर्हेतवः उच्यन्ते—

१—भूतकाले जातानां रामादीनां चेतसि वर्तमानो रसः वर्तमानकाले स्थितानां सामाजिकानां चेतसि चमत्कारं जनयितुमसमर्थः, यतोऽत्र कालकृतं व्यवधानं वर्तते।

२—आश्रयभेदादपि सामाजिके रसः चमत्कारं जनयितुमसमर्थः।

३—कस्यापि व्यक्तिविशेषस्य रामादेरेव रसानुभवः स्वीक्रियते चेत्, रसस्य लौकिकत्वं स्वीकर्तव्यं भवति; तच्च स्वीकरणमनिष्टापत्तिः।

अतः, इदं व्याख्यानमुपेक्षणीयकोटौ गच्छति।

इदानीं शङ्कुकाचार्यमतं विचार्यते। सः कथयति—

विभावानुभावव्यभिचारिणां व्याप्यव्यापकभावरूपात् = अनुमाप्यानुमापकभावरूपात् संयोगाद् रसस्य अनुमितिः भवति।

अयं नैयायिकः वर्तते। अत एव अयं स्वसम्प्रदायानुरूपं मतं प्रतिपादयति। यथा कश्चित् प्रमाता पर्वतरूपे पक्षे अविच्छिन्नधूमधारां पश्यन् तद्द्वारा वह्निमनुमिनोति, तथा अत्रापि यथार्थ-मिथ्या-संशय सादृश्यरूपाभ्यः लोकप्रसिद्धाभ्यः प्रतीतिभ्यः विलक्षणया बुद्ध्या 'चित्रतुरग-न्यायेन नटरूपः पक्षः चाक्षुषप्रत्यक्षस्य विषयः भवति। अर्थात् नटविषयकं प्रत्यक्षज्ञानं तादृशं वर्तते यथा तुरगस्य चित्रं विलोक्य आरोहणतृणभक्षणादिक्रियाशून्येऽपि चित्ररूपे तुरगे तुरगोऽयमिति ज्ञानं भवति। इद नटे रामोऽयमिति ज्ञानं न यथार्थरूपं, न मिथ्यारूपं, न संशयरूपमथवा न सादृश्यरूपमस्ति, अपि तु एतेभ्यः सर्वेभ्योऽपि ज्ञानेभ्यो विलक्षणं ज्ञानमस्ति।

अभिनयपटुः स नटोऽपि रत्यादिकार्याणि रोमाञ्चादीनि तथा प्रकटयति यथा कृत्रिमाणि अपि तानि यथार्थानीव सामाजिकैः मन्यन्ते। तानि हेतुतया स्वीकृत्य सामाजिकः नटे पक्षे रत्यादिस्थायिभावमनुमिनोति। अनुमीयमानोऽपि स रत्यादिभावः वस्तुसौन्दर्यबलाद् अनुमीयमानलौकिकवह्न्यादिपदार्थेभ्यः विलक्षणः स्थायित्वेन ज्ञायमानः नटे असन्नपि सामाजिकानां वासनापरपर्यायया धारावाहिन्या इच्छया चर्व्यमाणः रस इत्युच्यते।

नैयायिकेतरैः पूर्वपक्षिभिरिदं वक्तुं न शक्यते यत् सिद्धवस्तुविषयिणी अनुमितिः कथं भवितुमर्हति इति, यतः, अनुमित्सा अनुमितेर्जनिका; सा सिद्ध-

वस्तुविषयिणी अपि भवितुमर्हति, अतः, सिद्धिः अनुमितिप्रतिबन्धिका न भवति ।

न च 'अनुमितिर्न चमत्कारं जनयितुं समर्था, अपितु साक्षात्कार एव' इत्यपि वक्तुं शक्यते, यतः, विषयसौन्दर्यमेव चमत्कारजनने हेतुः, नानुमितिर्न वा साक्षात्कारः इति,

इदानीमस्मिन् व्याख्याने अरुचेर्हेतवः उच्यन्ते—

१—अस्मिन् व्याख्याने प्रत्यक्षमेव ज्ञानं लोकोत्तरचमत्कारजनकं नानुमित्यादिरूपं ज्ञानमिति लोकप्रसिद्धेर्विरोधः ।

२—सन्दिग्धसाध्यरूपे नटात्मके पक्षे रत्यादिरूपं साध्यं नास्त्येव । अतः, कश्चन विवेकी पुरुषः अनुमितौ प्रवृत्त एव न स्यात् ।

यथाकथञ्चिद् अनुमितौ सत्यामपि तस्य 'रसमनुमिनोमि' इति अनुव्यवसायो न भवति, अपि तु 'रसं साक्षात्करोमि' इति अनुव्यवसायो भवति, स च अनुमित्याकारव्यवसायात्मकज्ञानाननुरूपः इति विरोधः ।

इदानीं भट्टनायकस्य मतं विचार्यते—

सः कथयति—

विभावानुभावव्यभिचारिणां भोज्यभोजकभावरूपात् संयोगात् रसस्य भुक्तिः—आस्वादः भवति ।

अयं साङ्ख्यसिद्धान्ती वर्तते । अस्य मते अभिधातो लक्षणातश्च भिन्नेन भावकत्वनामकेन व्यापारेण विभावादिरूपाः सीतादयो रामसम्बन्धिनी रतिश्च सीतात्वरामत्वादिविशिष्टप्रकारं विहाय साधारणकामिनीत्वरतित्वादिप्रकारेण युक्ता विभावादयो रत्यादयश्च उपस्थाप्यन्ते ।

तदनन्तरं भोजकत्वनामकेन व्यापारेण रत्यादेरास्वादः सामाजिकेन क्रियते । अत एव असत्या अपि रतेः समाजिकेन क्रियमाण आस्वादः अलौकिकत्वादुपपन्नो भवति ।

अयं भावकत्व नाम्ना साधारणीकरणनामकं व्यापारं स्वीकरोति । ततश्च "भोजकत्व नामकेन व्यापारेण सामाजिकः रसास्वादं करोति" इति मन्यते । अयमनेन व्यापारेण रजस्तमसी अभिभूय सत्त्वस्य उत्कटरूपेण अवस्थितिमपि प्रतिपादयति । इयमेव सरणिः साङ्ख्यानाम् ।

इदानीमस्मिन् व्याख्याने अरुचेर्हेतवः उच्यन्ते—

१—भावकत्वव्यापारेणैव रसास्वादपर्यन्तं सर्वं कार्यं सम्पन्नं भवितुमर्हति, अतः, 'भोजकत्वनामकस्य व्यापारान्तरस्य कल्पने गौरवदोषः ।

२—रसास्वादस्य गुणद्वयाभिभवपूर्वकसत्वोद्रेकस्थितिकत्व-कल्पने प्रमाणाभावः ।

३—भावकत्वनामकस्य व्यञ्जनास्थानापन्नस्य व्यापारस्य स्वीकारे न किमपि नावीन्यम्, न वा किञ्चिद् वैशिष्ट्यम् ।

इदानीमाचार्याभिनवगुप्तपादानां मतं विचार्यते—

ते कथयन्ति—

स्थायिनां ( भावानां ) विभावादिभिः ( भावैः ) संयोगात्=व्यङ्ग्य-व्यञ्जकभावरूपात् सम्बन्धात् विभावादीनामेव वा परस्परं संयोगात् रसस्य निष्पत्तिः = अभिव्यक्तिः ।

अस्यायं विस्तृतोऽर्थः—लोके काव्यनाट्यभिन्नस्थले प्रमदोद्यानकटाक्षादिभिः स्थायिनो रत्यादेरनुमाने पाटवं प्राप्तवतां सामाजिकानामन्तःकरणे वासनारूपेण रत्यादिः पूर्वत एव सदा स्थितो भवति । अत एव स भावः स्थायी कथ्यते । एवमेव लोके प्रमदादयः कारणपदवाच्याः काव्ये नाट्ये च विभावपदवाच्या भवन्ति । एवमेव कटाक्षपातादीनि कार्याणि अनुभावपदवाच्यानि भवन्ति । एवमेव निर्वेदादीनि व्यभिचारपदवाच्यानि भवन्ति । क्रमेण विभावनानुभावनसञ्चारणनामकैर्व्यापारविशेषैरेषां तत्तन्नामभिर्व्यवहार उचित एव ।

एत एव विभावादयः रामादीनां, नटादीनामथवा मम वर्तन्ते अथवा न रामादीनां, न नटादीनां न वा मम वर्तन्ते, इति सम्बन्धविशेषस्वीकारपरिहारनियमानिर्णयात् साधारण्येन प्रतीयन्ते; ततश्च तैरभिव्यक्तः स्थायी रत्यादिको भावः चर्व्यमाणो रस इत्यभिधीयते । तस्मिन् समये प्रमाता सामाजिकः परिमितं प्रमातृभावं नानुभवति, अपि तु सकलसहृदयसम्मतिशालिना कामिनीविषयकरतित्वसामान्येन उपस्थापितं प्रत्यक्षज्ञानाकारं ब्रह्मानन्दमिव रसं स्वाकारवदभिन्नत्वेन अनुभवति ।

अस्मिन् मते सामाजिकानां हृदये वासनारूपेण स्थितस्य रत्यादेः स्थायिभावस्य आस्वाद एव रसनिष्पत्तिः; अतः, इदं मतं सकलविद्वज्जनैराद्रियते ।

ननु भरतमुनिकृते रससूत्रे विभावादिसंयोगादिति पञ्चमीनिर्देशेन विभावादीनां रसोत्पत्तौ हेतुत्वमुक्तम् । तच्च हेतुत्व कारकत्वरूपं ज्ञापकत्वरूपं वा भवितुमर्हति; अतो रसः कार्यो ज्ञाप्यो वा स्वीक्रियताम् ।

उच्यते—रसो न कार्यरूपः अवयवादिरूपोपादानकारणाद् व्यतिरिक्तस्य दण्डादिरूपकारणस्य नाशेऽपि कार्यमविनश्यत् तिष्ठति, किन्तु रसः विभावादिकारणनाशे न तिष्ठति, अतो न कार्यरूपः । एवमेव यथा पूर्वमेव सिद्धः घटः

दीपादिना ज्ञाप्यः भवति, तथा रसो न ज्ञाप्यः; यतो विभावादिसंयोगात् पूर्वं सः न सिद्धः। अत एव कार्यज्ञाप्यरूपभिन्नोऽयं रसः अलौकिकः। एतदलौकत्वमस्य भूषणम्, न तु दूषणम्। कथं तर्हि 'रसाः प्रतीयन्ते' इति व्यवहारः? उच्यते—यथा तण्डुलपाकानन्तरमेव ओदनपदव्यवहारो न तु ततः पूर्वम्, तथापि अग्नौ तण्डुलपूर्णे जलपूर्णे च पात्रे स्थापिते 'सः ओदनं पचति' इति व्यवहारो यथा औपचारिकः भवति, तथैव 'रसाः प्रतीयन्ते' इति व्यवहारोऽपि औपचारिकः।

इदमत्र अवधेयं यत् एकस्य रसस्य स्थायी भावः अन्यस्मिन् रसे व्यभिचारी भवितुमर्हति; यथा हासः हास्यरसस्य स्थायी भावः, किन्तु सः संयोगश्रृङ्गारे व्यभिचारी भावः भवति।

इदानीं रससङ्ख्याविषये विचार्यते—

श्रव्यकाव्ये नवरसाः, दृश्यकाव्ये अष्टौ रसाः, तत्र शान्तरसस्य अभिनयो न सम्भवतीति भरतमुनिना 'अष्टौ नाट्ये रसाः स्मृताः इत्युक्तम्।

केचन मन्यन्ते शान्तस्यापि अभिनयः सम्भवति।




रतिः श्रृङ्गारस्य स्थायिभावः।
उत्साहः वीरस्य ,,
शोकः करुणस्य ,,
विस्मयः अद्‌भुतस्य ,,
हासः हास्यस्य ,,
भयं भयानकस्य ,,
जुगुप्सा बीभत्सस्य ,,
क्रोधः रौद्रस्य ,,
शमः शान्तस्य ,,

तत्र प्रायः भोजराजप्रभृतयः सर्वे शृङ्गारं रसराजं कथयन्ति, यतोऽयं रसः सर्वप्राणिसुलभः सर्वाधिकचमत्कारी च ।

परन्तु महाकविर्भवभूतिः करुणरसं प्रधानं मन्यते; सः कथयति—

एको रसः करुण एव निमित्तभेदाद्
भिन्नः पृथक् पृथगिवाश्रयते विवर्तान् ।
आवर्तबुद्बुदतरङ्गमयान् विकारान्
अम्भो यथा सलिलमेव तु तत्समग्रम् ॥

( उत्तररा. च. अङ्कः-३ )

कृती नारायणः अद्भुतरसं प्रधानं मन्वते, यदाह विश्वनाथकविराजः-

रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते ।
तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः ॥
तस्माददद्भुतमेवाह कृतीं नारायणों रसम् ।

( सा. द. परि. ३ )

आचार्या अभिनवगुप्तपादाः शान्तरसं प्रधानं मन्वन्ते । कथयन्ति—

स्वं स्वं निमित्तमासाद्य शान्ताद् भावः प्रवर्तते ।
पुनर्निमित्तापाये तु शान्त एव प्रलीयते ॥

अस्माकमपि मतमेतदेव यत् सांसारिकसुखोन्मुखस्य सहृदयस्य परमार्थं प्रति उन्मुखीकरणं शान्ते एव भवति; तेनैव परमपुरुषार्थप्राप्तिः सम्भवति; ।

उक्तञ्च—

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मनैव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥

( श्रीमद्भगवद्गीता अ. ३ श्लो. १७ )

अतः शान्तरस एव प्रकृतिः अन्ये रसास्तद्विकृतयः इति ।

इदानीमयं प्रश्नो जागर्ति यत् भक्तिवात्सल्यादयो रसाः सन्ति न वा ?

उच्यते—एते न रसाः, अपि तु भावान्तर्गता एव, यतः, एतेषु सर्वेषु रतिरेव स्थायिभावः, स च शृङ्गारस्य स्थायी । सैव रतिर्यदा पूज्यविषया स्निग्धविषया वा भवति, तदा किञ्चिद्दूरपर्यन्तं रसतामावहति, न पूर्णरूपेण, अयं सचेतसामनुभवः ।

अतो भक्तिवात्सल्यादयो भावा एव। मम्मटाचार्या अपि एतदेवाहुः— 'रतिर्देवादिविषया व्यभिचारी तथाञ्जितः। भावः प्रोक्तः' (काव्यप्र०-४ उल्लासः)

एवं समग्रे विचारे कृते अयमेव निष्कर्षः यत् रसा नवसङ्ख्याका एव। ते च सहृदयानामेव गम्या इति।

—०—

## शान्तोऽपि नवमो रसः

केचित् कथयन्ति—

शान्तस्य शमसाध्यत्वात्
नटे च तदसम्भवात्।
अष्टावेव रसा नाट्ये
न शान्तस्तत्र युज्यते॥

इत्युक्तदिशा सकलभावप्रशमरूपस्य शमाख्यस्थायिभावस्य अभिनयकर्तरि नटेऽनुपपत्त्या शान्तरसो नाभिनेयः। किञ्च तादृशस्य शमस्य काव्येऽपि वर्णयितुमशक्यतया न क्वापि स्थितिः इति ते सर्वथा शान्तरसं तिरोभावयितुं यतन्ते।

तेषामयमाशयः—

'न यत्र दुःखं न सुखं न चिन्ता' इत्याद्युक्तप्रकारस्य सकलवृत्तिविरामरूपस्य शमाख्यस्थायिभावस्य व्यवहाराविषयतया विभावनादिव्यापाररूपेण परिणतिर्नैव शक्या सम्पादयितुमिति कथं तस्य विकासः, कथं वा परिपूर्णरसास्वादरूपता च सम्भवेत्?

वस्तुतस्तु नेदं शङ्कास्थानम्। सकलवृत्तिविरामरूपस्य शमस्य काव्यव्यापारगोचरत्वं नापेक्षते। श्रव्यत्वे दृश्यत्वे वा यत्किञ्चित् चेष्टादि व्यापारकलाप संवलितत्वं सुतरामपेक्षते। तादृशव्यापारशून्यस्य भावविशेषस्य न कोऽप्युपयोगः।

अतः विषयेभ्यो विरमन्त्याः चित्तवृत्तेः अभिव्यञ्जकाः चेष्टावाग्व्यापारादयो यत्र प्रतीयन्ते, तादृशस्यैव शमाख्यस्थायिभावस्य शान्तरसप्रयोजकत्वमभ्युपगन्तव्यम्।

विषयेभ्यो लग्नालग्नप्रायचित्तवृत्तेः गृहपरित्यागप्रपञ्चमिथ्यात्वकथन भगवद्गुणसङ्कीर्तनादयः कविव्यापारगोचराः सन्तो विभावादिरूपतां धारयितुं शक्नुवन्ति।

अतः, तादृशस्य अभिनयस्य वर्णनस्य वा सर्वथा सम्भवात् अस्त्येव शान्तो नाम नवमो रसः सहृदयहृदयानुभवसाक्षिकः।

यदभिप्रायेण निर्णयन्ति केचन—

अष्टावेव रसा नाट्येष्विति केचिदचूचुदन्।
तदचारु यतः कश्चिन्न रसं स्वदते न च॥

निर्वेदः स्थायिभावः। स च शान्तचिन्तनसत्पुरुषोपदेशादिजन्मा, किन्तु गृहकलहादिजन्यः निर्वेदः व्यभिचारिभावः।

केचित्तु तस्यैव नामान्तरं शम इति वदन्ति।

न च भक्तिरसेऽस्य अन्तर्भावः, यतो भक्तिरसे आराध्यविषयकरतिरूपानुरागो विषयो भवति। अत्र च विरागस्य प्राधान्यं भवति; अतः उभयोर्भेदः।

नापि दयावीरेऽस्यान्तर्भावः तस्य साहङ्कारत्वादस्य च निरहङ्कारत्वात्।

एतावद्विचारस्य अयं निष्कर्षः यत् सर्वैरपि सुधीभिः शान्तरसस्य दृश्ये श्रव्ये च काव्ये अस्तित्वं स्वीकार्यम्।

—०—

## गुणालङ्कारविभेदविचारः

काव्यस्वरूपप्रतिपादनप्रसङ्गेन वामनादयः प्राञ्च आचार्याः एवं समाम्नासिषुः यत् काव्यशोभायाः कर्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलङ्काराः इति।

तैः आचार्यैः काव्यशोभाकरत्वरूपं सामान्यं धर्ममाश्रित्य तदभ्यन्तरे एव गुणालङ्कारयोः सन्निवेशः अकारि। प्राचीनपरम्परायां श्लेषादिरूपाणां बहुसङ्ख्याकानां गुणानाम् उपमादीनां भूयसामलङ्काराणाञ्च सङ्ग्रहस्य अवश्यकर्तव्यतया काव्यशोभाजनकत्वेनैव लक्षणकरणमुपयुज्यते प्रातिस्विकसम्बन्धकल्पनायां परस्परभेदकबाहुल्येन अनवस्थाप्रसङ्गात् तद्दृष्ट्या समुचितमेव पृथक् प्रस्थानम्।

किञ्च तेषां मते गुणानामपि शब्दार्थधर्मत्वात् अलङ्कारसमकोटिकत्वं कल्पनानुकूलम्।

किन्तु ध्वनितत्ववादिनस्तस्मिन् विषये प्रत्यवतिष्ठन्ते। तथाहि गुणशब्दव्यवहारः किं मूल इति गवेषणायां शौर्यादिलौकिकगुणदृष्टान्तमुपजीव्यैव प्रवृत्तः इत्यनुमन्तव्यम्। शौर्यादिगुणानामात्मधर्मतया तत्तुल्यन्यायेन काव्यगतानां माधुर्यादीनामपि काव्यात्मभूतरसधर्मत्वं स्वीकरणीयमेव।

ननु नास्त्येव काव्यात्मा कश्चन शब्दार्थातिरिक्तः, शब्दार्थयोरेव प्रत्यक्षत्वात् इति चेत्, अस्मिन् नये अन्वयव्यतिरेकावेव शरणीकरणीयौ ।

'देवदत्तः शूरः' इति वाक्यार्थपर्यालोचनायां किं शौर्यं तदीयहस्तपादादिनिष्ठम् उत साहसनिष्ठम् इति विचारे द्वितीयैव कोटिः अवतिष्ठते । न खलु विगतासुः देवदत्तः शौर्यमाविर्भावयितुमलम् । इत्यतो माधुर्यादीनां काव्यगुणानामात्मभूतरसधर्मत्वं सिद्धम् । अभिव्यञ्जकतासम्बन्धेन औपचारिकविधया शब्दार्थगतत्वकल्पनापि क्रियते । एवं रसोत्कर्षकत्वे सति रसाव्यभिचारिस्थितिकत्वम् अव्यभिचारेण रसोपकारकत्वञ्चेति लक्षणद्वयं गुणस्य फलितं मन्तव्यम् ।

पण्डितराजस्तु—आत्मनो निर्गुणतया आत्मरूपरसगुणत्वं माधुर्यादीनामनुपपन्नम् एवं तदुपाधिरत्यादिगुणत्वमपि मानाभावात् पररीत्या (नैयायिकरीत्या ) गुणे गुणान्तरानङ्गीकारात् ।

किञ्च शृङ्गारो मधुरः इत्यादिव्यवहारः प्रयोजकतासम्बन्धेन कथञ्चिदुपपादनीयः—इत्याह ।

तदपि न विचारसहम् । काव्यात्मनो रसस्य सर्वथा निर्गुणत्वे विभावादिसंवलितरसचर्वणानुदयप्रसङ्गात् । अन्यच्च—तादृशस्य निर्गुणस्य काव्यात्मत्वे रत्याद्युपाधिकल्पनमपि न विचारयोग्यं सोपाधिकत्वे निर्गुणत्वभङ्गात् ।

गुणे गुणान्तरकल्पनमनुचितमिति यदुच्यते तत् तार्किकाभिमतरूपरसादिचतुर्विंशतिगुणापेक्षया काव्यगतानां गुणानां वैलक्षण्यात् न प्रासङ्गिकम् ।

किञ्च नहि गुणाभिव्यञ्जनं विना गुणाभिव्यञ्जकत्वं नास्ति इत्यस्ति नियमः, इन्द्रियत्रये व्यभिचारात् इति यदुक्तम्, तदपि प्रत्यक्षविरोधात् न क्षोदक्षमम् ।

यतो दृष्टान्तदार्ष्टान्तिकयोः सर्वत्र सर्वाङ्गीणं सादृश्यं भवन्तीति नास्ति नियमः, प्रत्यक्षादिविरोधे तदस्वीकरणात् । माधुर्यादिगुणवत् काव्यश्रवणवेलायां यत्किञ्चिद्रसादिसंस्पर्शे सत्येव माधुर्याद्यभिव्यक्तिः, अन्यथा तु अनुप्रासाद्यलङ्कारमुखेनैव व्यवहारः इति सहृदयानुभवप्रत्यक्षवशात् काव्यनये गुणगुणिनोः एकोपस्थितिगोचरत्वमवश्यमभ्युपेयम् ।

यथा 'लताकुञ्जं गुञ्जन्' इत्यादौ यदि शृङ्गाररसोद्दीपनविभावत्वेन प्रतीतिः तदा नियता माधुर्यगुणाभिव्यक्तिः स्यात्, अन्यथा केवलमनुप्रास एव । अन्तरङ्गशोभाजनकत्वं गुणेषु स्वीकृत्य बहिरङ्गशोभाजनकत्वमलङ्काराणाम् अङ्गीक्रियते ध्वनितत्त्वविद्भिः ।

रसोपकारकत्वे सति तद्वृत्तित्वम् तथात्वे सति रसानियतस्थितिकत्वम्, अनियमेन रसोपकारकत्वमलङ्काराणां लक्षणमभ्युपेयते । अलङ्कारशब्दो

द्विविधया व्युत्पत्त्या स्वरूपं लभते। अलङ्करणमलङ्कारः, अलङ्क्रियतेऽनेन रसभावादिकमित्यलङ्कारः अथवा अलङ्करोति रसादिमिति वा।

तत्रेदं वेदितव्यम्—

नियमेन रसोपकारकत्वं गुणानाम् अनियमेन रसोपकारकत्वमलङ्कारणामित्येको भेदः, अथवा समवायसम्बन्धेन स्वाश्रयरसोपकारकत्वं गुणानां संयोगसम्बन्धेन रसोपकारकत्वमलङ्काराणामिति परस्परमनयोर्भेदः।

अत एवाह मम्मटः—

ये रसस्याङ्गिनो धर्माः, उपकुर्वन्ति तं सन्तमित्यादि च।

अलङ्काराणां काव्यजीवातुभूतरससम्बन्धे विविधा स्थितिः। तथाहि—क्वचित् शब्दार्थसौन्दर्याधानेन रसोपकारकत्वम्, क्वचित्तु शब्दार्थमात्रसौन्दर्याधायकत्वम्, क्वचित्तु प्रतिकूलत्वे रसानुपकारकत्वम्। यथा 'उद्वर्तयति उल्लोटयति' इत्यादौ रसानुपकारकत्वमस्ति।

एवमलङ्काराणां अनियमेन रसोपकारकत्वं सिद्धम्।

ननु रसानुपकारकत्वे कथमलङ्कारशब्दव्युत्पत्तिनिर्वाह इति चेत् अस्थानेषु धृतानां कण्ठाभरणादीनां, मञ्जूषादिगतानां वा यथा हारादिपदव्यपदेश्यता न प्रतिबध्यते तद्वदेव तादृशेषु अलङ्कारव्यवहारो गौणः इति अङ्गीकरणीयम्।

एवमलङ्कारध्वनिस्थलेऽपि 'ब्राह्मणश्रमणन्यायेन वाच्यतादशीयमलङ्कारत्वं व्यङ्ग्यमानतादशायामपि उपचर्यते।

गुणालङ्कारविषये विचारोऽयं मया कृतः।
नीरक्षीरविवेकोऽत्र श्रयणीयः सुधीजनैः॥

—:०:—

# रीतिरात्मा काव्यस्य

काव्यस्वरूपं परीक्षमाणानां प्राचामालङ्कारिकाणां मध्ये कतिपये रीतिस्वरूपमेव काव्यस्य प्रधानतमं तत्त्वमाम्नासिषुः। रीतिसम्प्रदायस्य प्रवर्तकः वामनाचार्य एव। सः 'रीतिरात्मा काव्यस्य' इति इत्याह 'काव्यालङ्कारसूत्रे' (१।२।६) स्वग्रन्थे।

रीतिलक्षणविषये सः तत्रैव कथयति—विशिष्टा पदरचना रीतिः (का सू. १।२।७)

'रीतिर्गुणालम्बिता' इति हेतोरीति सम्प्रदायं केचन 'गुणसम्प्रदायापरनामानं कथयन्ति।

तत्र इत्थं प्रतिभाति—काव्यतत्त्वपरीक्षा द्विधा प्रावर्तत । बहिरङ्गलक्षणानुसारिणी अन्तरङ्गलक्षणानुसारिणी च । तत्र रीतिवादिनां बहिरङ्गानुसारिणी प्रक्रिया । शब्दार्थौ काव्यशरीरतया बहिरङ्गभूतौ । तत्रापि शाब्दबोधासाधारणकारणतया शब्दज्ञानस्य प्राथम्यमङ्गीकृत्य तत्स्वरूपनिरूपणेनैव काव्यतत्त्वस्यापि निरूपणमुचितममन्यन्त रीतिवादिनः । अतएव दण्डिनः काव्यलक्षणमित्थ तावत्—'शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली' अत्र शरीरपदं लक्षणपरम् । अर्थात् अभीष्टार्थप्रतिपादिका शब्दसङ्घटना काव्यपदेनाभिधातुमुचिता इति तदभिप्रायः । देशभेदेन अनेकधा प्रवहन्तीनां कविगिरां शब्दसङ्घटनाः परिशील्य तदनुसारं वैदर्भीगौडीत्यादिव्यपदेशो भवतीति केचिद् विद्वांसो मन्यन्ते ।

वस्तुतस्तु वैदर्भगौडाद्याः शब्दसन्दर्भविशेषाः न तु देशविशेषनिष्ठाः । इयं शब्दसङ्घटना किञ्चित् सौन्दर्यं विना न प्रतिष्ठामर्हति इति श्लेषादीन् दश शब्दगुणान् दश अर्थगुणांश्च वामनादयः प्रतिष्ठापयामासुः । तादृशगुणविशिष्टा रीतिरेव काव्यजीवातुभूता इति तत्सिद्धान्तः ।

प्रारम्भकाले रीतीना सम्बन्धस्तत्तद्देशविशेषेण आसीत् । अत एव तासां नामानि तथा विधानि सन्ति । यथा—

विदर्भदेशे भवा वैदर्भी, पाञ्चालदेशे भवा पाञ्चाली, गौडदेशे भवा गौडी, लाटदेशे भवा लाटी इति, परन्तु कालान्तरे सर्वत्रैव सर्वा अपि रीतीराश्रित्य कविभो रचनाः कृताः क्रियन्ते करिष्यन्ते च ।

मम्मटाचार्यो वृत्तिमेव रीतित्वेन स्वीकरोति । सः कथयति—एतास्तिस्रो वामनादीनां वैदर्भीगौडीपाञ्चाल्याख्या रीतयो मताः ( का० प्र० ९।८१ पूर्वार्धवृत्तिः ) ।

आचार्यराजशेखरः काव्यमीमांसायां कथयति—वेशविन्यासक्रमः प्रवृत्तिः, विलासविन्यासक्रमो वृत्तिः, वचनविन्यासक्रमो रीतिः' इति ।

भोजदेवः सरस्वतीकण्ठाभरणे कथयति—

'रीङ्गताविति धातोः सा
व्युत्पत्त्या रीतिरुच्यते' ।

अत एव आधुनिकाः केचन विद्वांसः वृत्तेः सम्बन्धं विकास-विक्षेपसङ्कोचादिमानसिकावस्थाभिः सह योजयन्ति ।

इत्थं सुस्पष्टं भवति यत् रीतिरात्मा काव्यस्य इति सिद्धान्तः तद्वादिभिर्वामनादिभिः विचारितः स्वतन्त्रसम्प्रदायरूपतां धारयन् स्थाने शोभते ।

——०——

# (तदीयः) दर्शनशास्त्रविचारनामकस्तरङ्गः

## चार्वाकदर्शनस्वरूपम्

सर्वेषामपि दर्शनशास्त्राणां प्रारम्भबिन्दुश्चार्वाकदर्शनम्। समादरणीयै-राचार्य बलदेवोपाध्यायैः चर्व् धातोः चार्वाक शब्दः निष्पादितः। अग्रे ते कथयन्ति—एतेषां चारुवाचं श्रुत्वा जना एतान् 'चार्वाका' इति कथयन्ति। अस्मद्विचारेण चर्वन्ते अकन्ते च इति चार्वाकाः तेषां दर्शनम् चार्वाक-दर्शनम्—इतीयं व्युत्पत्तिः अधिकं युक्तियुक्ता वर्तते। अत्र 'चर्व' धातुश्च-र्वणार्थकः' अक धातुः कुटिलगत्यर्थकः।

अस्यैव दर्शनस्य नामान्तरं 'लोकायतदर्शनम्। लोके आयतन्ते इति लोकायताः लोकायतानां - संसारसुखासक्तानां सम्मतं दर्शनम् लोकायत-दर्शनम्—इत्यस्ति अस्य व्युत्पत्तिः।

अस्यैव दर्शनस्य तृतोयं नामान्तरं बार्हस्पत्यदर्शनमित्यस्ति। श्रूयते यत् पुरा शुक्राचार्ये तपसे गते सति बृहस्पतिः तस्य छद्मरूपं विधाय असुराणां समीपं गत्वा तान् संसारसुखे आसञ्जयितुमुपदिदेश। तेऽपि तदीयेन उपदेशेन संसारसुखे आसक्ता जाताः। अतः, बृहस्पतिप्रणीतत्वादिदं बार्हस्पत्यमित्युच्यते। अस्यैव दर्शनस्य अन्यानि नामानि भौतिकवादः, नास्तिकवादः, स्वभाववादः, भोगवादः—इत्यादीनि सन्ति।

चार्वाकाः मन्यन्ते—

पृथिव्यप्तेजोवायवः—एतानि चत्वारि एव सृष्टेर्मूलतत्त्वानि। तेभ्य एव देहाकारपरिणतेभ्यः किण्वादिभ्यो मदशक्तिवत् चैतन्यमुपजायते। तेषु विनष्टेषु सत्सु देहः स्वयमेव विनश्यति। तस्मात् कारणात् चैतन्यविशिष्टो देह एव आत्मा।

प्रत्यक्षमेव एकं प्रमाणं वर्तते। निषेधस्य ज्ञानं विधिज्ञानानन्तरमेव भवति, इति हेतोः 'साध्यव्यापकत्वे सति साधनाव्यापकस्य उपाधेर्ज्ञाने जाते सति उपाध्यभावविशिष्टसम्बन्धरूपाया व्याप्तेर्ज्ञानं भवितुमर्हति। व्याप्तिज्ञाना-धीनञ्च उपाधिज्ञानं भवति, इति परस्पराश्रयदोषस्य सत्त्वात् अविनाभावरूपा व्याप्तिरेव न स्थिरीभवति।

अतः, अनुमानप्रमाणस्य नास्ति कुत्राप्यवकाशः। एतस्यां स्थितौ अन्येषां प्रमाणानां चर्चापि समययापनमेव।

अङ्गनालिङ्गनादिजन्यं सुखमेव पुरुषार्थः। दुःखभयात् अनुकूलवेदनीयं सुखं न हेयकोटिं याति, अपि तु ग्राह्यकोटिमेव। कण्टकादिजन्यं दुःखमेव नरकः। राजा ( शासकः ) एव परमेश्वरः। देहात्मवादे स्वीकृते सति कृशोऽहं श्यामोऽहम्—इत्यादि सामानाधिकरण्यमपि सङ्गतं भवति। 'इदं मम शरीरम्' इत्यादिभेदव्यवहारः 'राहोः शिरः' इति व्यवहारवत् लाक्षणिकः स्वीकरणीयः। इदमेव चार्वाकदर्शनस्वरूपम्।

एत एव च चार्वाकसम्मताः प्रमुखाः सिद्धान्ता इत्यपि वेदितव्यम्।

—:-०-:—

## चार्वाकानुसारमनुमानप्रमाणखण्डनम्

नास्तिकशिरोमणिश्चार्वाकसम्प्रदायी प्रत्यक्षातिरिक्तं किमप्यन्यत् प्रमाणं न स्वीकरोति, अपि तु तत् खण्डयति। सः कथयति—प्रत्यक्षमेव प्रमाणमिति।

जैनाः बौद्धाश्च वेदप्रामाण्यमस्वीकुर्वन्तोऽपि अनुमानं प्रमाणं स्वीकुर्वन्ति! अन्ये नैयायिकादयः वेदप्रामाण्याङ्गीकारिणोऽपि अनुमानं प्रमाणं मन्यन्ते। ते कथयन्ति—इन्द्रियागोचराणां कालमहदादीनां सत्ता प्रत्यक्षप्रमाणेन न सिद्ध्यति। तेषां सत्तां साधयितुमनुमानप्रमाणमावश्यकम्।

चार्वाकः कथयति—

| व्याप्तिज्ञानं न सम्भवति | कार्यकारणभावोऽपि न सम्भवति |
|---|---|

**व्याप्तिज्ञानाभावविषये सः वदति—**

अनुमानप्रमाणं व्याप्तिज्ञानं विना न प्रवर्तते। व्याप्तिश्च शङ्कितेन निश्चितेन वा उपाधिना रहितः पक्षलिङ्गयोः सम्बन्धः। इदं व्याप्तिज्ञानं प्रत्यक्षेण, अनुमानेन, शब्देन अथवा अन्येन उपमानादिना वा प्रमाणेन न सम्भवति।

**( क ) प्रत्यक्षद्वारा व्याप्तिज्ञानं न सम्भवति**

प्रत्यक्षं तावत् द्विविधम्—बाह्यमाभ्यन्तरञ्च। बाह्यप्रत्यक्षज्ञानकरणानां चक्षुरादीनां बाह्येन्द्रियाणां सम्बन्धः केवलं वर्तमानेन एव पदार्थेन भवितु-

मर्हति, नान्यकालिकेन। अतः, त्रैकालिकसम्बन्धवत्या व्याप्तेर्ज्ञानं प्रत्यक्षेण प्रमाणेन न भवितुमर्हति। उक्तञ्च माधवाचार्यैः—न तावत् प्रत्यक्षम्। तच्च बाह्यमान्तरं वाऽभिमतम्। न प्रथमः (कल्पः स्वीकार्यः)। तस्य (प्रत्यक्ष-प्रमाणस्य) सम्प्रयुक्तज्ञानजनकत्वेन वर्तमाने प्रसरसम्भवेऽपि भूतभविष्यतोस्तद-सम्भवेन सर्वोपसंहारवत्या व्याप्तेः दुर्ज्ञानत्वात्। (सर्वदर्शन० पृ० ११)

व्याप्तिज्ञानं धूमत्ववह्नित्वादिरूपस्य सामान्यस्य (अर्थात् 'धूमत्वं वह्नित्वव्याप्यम्' इत्याकारकज्ञानेनापि धूमवह्निरूपयोर्व्यक्त्योर्विषये) व्याप्ति-ज्ञानं न सम्भवति; यतः, जातौ विद्यमानाः सर्वे धर्मा व्यक्तावपि विद्यमानाः स्युरिति निश्चयो नास्ति। यथा—गोत्वं रूपरहितं वर्तते, परन्तु गोव्यक्तिः रूपवती वर्तते। एवमेव गोत्वं नित्यं वर्तते, किन्तु गोव्यक्तिरनित्या वर्तते।

आन्तरप्रत्यक्षेणापि व्याप्तिज्ञानं न सम्भवति, यतः, अन्तःकरणं बाह्येन्द्रियाधीनं भवति—इति हेतोः धूमवह्न्यादिबाह्यपदार्थेषु अन्तःकरणस्य स्वातन्त्र्येण प्रवृत्तिर्न भवति। माधवाचार्यैरुक्तमपि—

नापि चरमः अन्तःकरणस्य बहिरिन्द्रियतन्त्रत्वेन बाह्येऽर्थे स्वातन्त्र्येण प्रवृत्त्यनुपपत्तेः (सर्वदर्शन०)

**(ख) अनुमानेनापि व्याप्तिज्ञानं न सम्भवति—**

यतः अनुमानाश्रितां व्याप्तिं साधयितुं द्वितीयस्यानुमानस्य आवश्यकता भविष्यति, पुनस्तमनुमानं साधयितुं तृतीयस्यानुमानस्य आवश्यकता भवि-ष्यति। एवं सति अनवस्थादोषो दुर्वारो भविष्यति। अतोऽनुमानेनापि व्याप्तिज्ञानं न स्वीकार्यम्। माधवाचार्यैः अपि कथितम्—नाप्यनुमानं व्याप्तिज्ञानोपायः, तत्र तत्रापि एवमित्यनवस्थादोषप्रसङ्गात्। (सर्वदर्शन०)

**(ग) शब्दप्रमाणेनापि व्याप्तिज्ञानं न सम्भवति—**

यतः आचार्यकणादस्य मतेन 'शब्द'प्रमाणमनुमानप्रमाणस्य एव एकः प्रकारः। उक्तञ्च आचार्यविश्वनाथपञ्चाननभट्टाचार्यैः—

**शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते।**
**अनुमानगतार्थत्वादिति वैशेषिकं मतम्**

(न्यायसि० मु० का० १४०-१४१)

यदि नैयायिकमतेन शब्दप्रमाणमनुमानप्रमाणात् पृथक् स्वीक्रियेत, तर्हि शब्दस्य प्रामाण्यार्थं मध्यमवृद्धपुरुषव्यवहाररूपं लिङ्गं स्वीकार्यं

( शक्तिग्रहसाधको हेतुः स्वीकार्यः ) भवति। यथा—कश्चित् व्युत्पित्सुर्बालः उत्तमवृद्धस्य 'गामानय' इतिवचनं श्रुतवन्तं मध्यमवृद्धं गवानयनप्रवृत्तं विलोक्य अर्थात् तदीयगवानयनप्रवृत्तिरूपं लिङ्गं विलोक्य 'गामानय' इत्यस्य शब्दस्य ( वाक्यस्य ) गवानयने प्रवर्तकत्वं जानाति, तथैव 'धूमो वह्निव्याप्यः' इतिरूपेण शब्दप्रमाणेन उत्पन्नस्य व्याप्तिज्ञानस्य तत्प्रयोजकानां 'धूमः, वह्निः, इत्येतेषां शब्दानां अर्थे बुद्धे एव भवितुमर्हति, न ततः पूर्वम्। किञ्च एतच्छक्तिग्रहार्थं पुनरन्यस्य वृद्धव्यवहाररूपस्य लिङ्गस्य ( अर्थात् अनुमानस्य ) आवश्यकता भविष्यति। पुनरपि तच्छक्तिग्रहार्थं तदन्यस्य वृद्धव्यवहाररूपस्य लिङ्गस्य आवश्यकता भविष्यति। एवं सति अनवस्थादोषो दुर्वारः।

उपमानादिनापि व्याप्तिज्ञानं न सम्भवति यतः, संज्ञासंज्ञिसम्बन्धज्ञानरूपाया उपमितेर्जनकस्य सादृश्यज्ञानरूपस्य उपमानस्य अनौपाधिकसम्बन्धबोधकत्वं नास्ति।

अतः, वक्तव्यस्य सारांशोऽयं यत् अनुमानमन्यानि च प्रमाणानि न स्वीकार्याणि, अपि तु केवलं प्रत्यक्षप्रमाणमेव स्वीकार्यम्।

—:-०-:—

## सप्तभङ्गिनयविचारः

सप्तभङ्गी नयः अथवा स्याद्वादः जैनदर्शनस्य आधारभूतः सिद्धान्तः। जैनदर्शनानुसारं प्रत्येकं वस्तु अनन्तधर्मात्मकं भवति। अतः, साधारणेन मनुष्येण कस्यापि वस्तुनः सर्वेषां धर्माणामेकस्मिन्नेव क्षणे ज्ञानं लब्धुं न शक्यम्। अस्मिन् विषये जैनदार्शनिकैः षण्णामन्धानां गजस्य च दृष्टान्तः दीयते। अस्य अभिप्रायः अयम् यत् मनुष्येण कस्यापि वस्तुनः आंशिकमेव ज्ञानं प्राप्यते। इदमांशिकज्ञानमेव 'नय'पदेन अभिधीयते। उक्तञ्च—

"अनेकान्तात्मकं वस्तु गोचरः सर्वसंविदाम्।
एकदेशविशिष्टोऽर्थो नयस्य विषयो मतः॥'

—स्याद्वादमञ्जरी

इदमांशिकज्ञानमाश्रित्य जायमानः परामर्शः अपि नयः कथ्यते। प्रत्येकं नयं परामर्शं वा सीमितं सापेक्षञ्च कर्तुं ततः पूर्वं 'स्यात्' शब्दो योज्यते।

'स्यात्' इत्ययं तिङन्ताकारो निपातः। अस्य निपातस्य अर्थः 'कथञ्चित्' इत्यस्ति। जायमानः प्रत्येकं नयः सप्तसमुच्चयात्मकः भवति। समुच्चयस्यैव पर्यायः 'भङ्गः' इत्यस्ति। अतएव, अयं नयः 'सप्तभङ्गी नयः' कथ्यते। केचन विद्वांसः कथयन्ति यत् साङ्ख्यादिदर्शनैः प्रतिपादितस्य एकान्तवादस्य भङ्गं विधाय अयं नयः प्रतिपाद्यते अनेनापि हेतुना अस्य नाम 'सप्तभङ्गिनयः' इति कथ्यते। अस्यैव नयस्य नामान्तरम् अनेकान्तवादः इत्यपि अस्ति। अस्य नयस्य सप्त प्रकाराः इमे सन्ति—

१—स्यात् अस्ति ( विधिकल्पना )
२—स्यान्नास्ति ( निषेधकल्पना )
३—स्यादस्ति च नास्ति च ( क्रमेण विधिनिषेधयोः कल्पना )
४—स्यादवक्तव्यः ( युगपद् विधिनिषेधयोः कल्पना )
५—स्यादस्ति च अवक्तव्यः ( विधिकल्पना तथा युगपद् विधिनिषेधयोः कल्पना )
६—स्यान्नास्ति च अवक्तव्यः ( निषेधकल्पना तथा युगपद् विधिनिषेधयोः कल्पना )
७—स्यादस्ति च नास्ति च अवक्तव्यः ( क्रमेण युगपच्च विधिनिषेधयोः कल्पना )

एतेषां प्रकाराणां विवरणमिदमस्ति—

**१—स्यादस्ति—**

इत्यस्य अर्थः अस्ति यत् कश्चित् पदार्थः कथञ्चित् केनापि धर्मविशेषेण सह सम्बद्धः अस्ति। माधवाचार्यैः कथितमपि—

**"तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत्।"**

—सर्वदर्शनसङ्ग्रहः

यथा—'स्यादस्ति घटः' इत्यस्य अर्थः अस्ति यत् एकस्मिन् कालविशेषे स्थानविशेषे रूपविशेषवान् घटः विद्यते।

**२—स्यान्नास्ति—**

कस्यापि वस्तुविशेषस्य केनापि धर्मविशेषेण सह सम्बन्धस्य निषेधे चिकीर्षिते 'स्यान्नास्ति' इत्यस्य प्रयोगः भवति। उक्तञ्च—

**"स्यान्नास्तीतिप्रयोगः स्यात्तन्निषेधे विवक्षिते।"**

—सर्वदर्शनसङ्ग्रहः

यथा—'स्यान्नास्ति घटः' इत्यस्य अर्थः अस्ति यत् कोऽपि घटविशेषः कस्मिश्चित् कालविशेषे कस्मिश्चित् देशविशेषे नास्ति।

**३—स्यादस्ति च नास्ति च—**

कस्यापि वस्तुनः सत्तात्मकं निषेधात्मकञ्च इति उभयविधस्य स्वरूपस्य सम्वलितरूपेण ज्ञानाय प्रथमं द्वितीयञ्च नयमेकीकृत्य 'स्यादस्ति च नास्ति च' इत्येषः तृतीयः नयः भवति। उक्तञ्च—

**'क्रमेणोभयवाञ्छायां प्रयोगः समुदायभाक्।'**

—सर्वदर्शनसङ्ग्रहः

यथा—"स्यादस्ति च नास्ति च घटः" इत्यस्य वाक्यस्य अर्थः अस्ति यत् कस्मिश्चित् कालविशेषे स्थानविशेषे च कश्चित् घटविशेषः विद्यते तथा तस्मिन्नेव कालविशेषे अन्यस्मिन् स्थानविशेषे सः घटः न विद्यते।

**४—स्यादवक्तव्यः—**

यदा कस्यापि वस्तुनः अस्तित्वं नास्तित्वञ्च इत्युभौ धर्मौ सहैव वक्तव्यौ, तदा 'स्यादवक्तव्यः' इत्यस्य नयस्य प्रयोगः भवति। उक्तञ्च—

**"युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः।"**

—सर्वदर्शनसङ्ग्रहः

यथा—आमः घटः पाकात्पूर्वं श्यामः भवति। स एव पाके सति रक्तवर्णः भवति। अस्यां वस्तुस्थितौ यदि कश्चित् जिज्ञासुः सर्वेषु कालेषु घटस्य यथार्थं रूपं किम् इति पृच्छति तर्हि अस्य प्रश्नस्य निष्कपटमुत्तरं 'स्यादवक्तव्यः घटः' इत्येव भवति। अस्य अयमर्थः यत् परिस्थितीनां वैविध्यादेकस्मिन् घटे परस्परं विरोधिनां नानाधर्माणां सत्त्वात् घटस्य वास्तविकं रूपं अवक्तव्यम् = अनिर्वचनीयम् अस्ति।

**५—स्यादस्ति च अवक्तव्यः—**

यदा कोऽपि पदार्थः परिस्थितिविशेषे विद्यमानोऽपि अनिर्वचनीयो भवति, तदा तदर्थं 'स्यादस्ति च अवक्तव्यः' इति प्रयोगो भवति। प्रथमं चतुर्थञ्च भङ्गं सम्मेल्य अयं पञ्चमो भङ्गः ( प्रकारः ) भवति। यथा—कश्चन आमः घटः पाकात् पूर्वं श्यामवर्णवान् भवति, परन्तु पाकानन्तरं रक्तवर्णवान् एव भविष्यति अथवा अन्यवर्णवान् इति निश्चयेन वक्तुं न शक्यते; अतः, अस्यां स्थितौ तस्य घटस्य कृते 'स्यादस्ति च अवक्तव्यः' इति नयः ( प्रकारः ) प्रयुज्यते। उक्तञ्च—

**'आद्यावाच्यविवक्षायां पञ्चमो भङ्ग इष्यते ।'**

**६—स्यान्नास्ति चावक्तव्यः—**

कस्यापि पदार्थस्य निषेधेन सह तस्य अनिर्वचनीयतां प्रकटयितुं 'स्यान्नास्ति चावक्तव्यः' इति नयः प्रयुज्यते । यथा—कश्चन आमः घटः पाकात् पूर्वं रक्तवर्णवान् नास्ति, परन्तु पाकानन्तरं सः रक्तवर्णवान् भविष्यति न वा इति निश्चयेन वक्तुं न शक्यते; अतः, अस्यां स्थितौ तस्य घटस्य कृते 'स्यान्नास्ति चावक्तव्यः' इति नयः प्रयुज्यते । उक्तञ्च—

**'अन्त्यावाच्यविवक्षायां षष्ठभङ्गसमुद्भवः ।'**

**७—स्यादस्ति च नास्ति चावक्तव्यः—**

कस्यापि पदार्थस्य अस्तित्वं नास्तित्वमनिर्वचनीयत्वञ्च युगपत् प्रकटयितुं 'स्यादस्ति च नास्ति चावक्तव्यः' इत्ययं नयः प्रयुज्यते । उक्तञ्च— **'समुच्चयेन युक्तश्च सप्तमो भङ्ग उच्यते ।'** यथा—कश्चन घटः मृत्तिकात्वेन रूपेण सदा एकरूप एव तिष्ठति । अतः, सः अस्ति, परन्तु पाकादिना तस्य रूपं क्षणे-क्षणे परिवर्तते; अतः, स घटः नास्ति । एकस्मिन्नेव समये इमौ द्वावपि पर्यायौ समन्वितौ भवतः; अतः, स घटः अवक्तव्यः अपि वर्तते ।

इत्थम्, एतावत्पर्यन्तं कृतेन विवेचनेन सप्तभङ्गिनयस्य स्वरूपं सुस्पष्टं भवति ।

—****—

# बौद्धदर्शनस्वरूपं तद्भेदाश्च

'बौद्ध' शब्देन, बुद्धोपदिष्टः आचारः, बुद्धानुयायी, बुद्धानुमतं दर्शनञ्चेति त्रितयम् अभिधीयते । भगवता बुद्धेन यदुपदिष्टं तत्सर्वं तन्निर्वाणानन्तरं महाकश्यपनामकस्य बुद्धानुयायिनः साभापत्ये लिपिबद्धं क्रियते स्म । तदेव कालान्तरे पिटकत्रयरूपेण सङ्गृहीतं बौद्धैः । इमानि वर्तन्ते तानि पिटकानि—

१—सुत्तपिटकम्—अस्मिन् बुद्धस्य उपदेशाः सङ्कलिताः सन्ति ।

२—विनयपिटकम्—अस्मिन् आचारनिरूपणं वर्तते ।

३—अभिधम्मपिटकम्—अस्मिन् दार्शनिकविषयाः विवेचिताः सन्ति ।

बुद्धसम्मतानि चत्वारि आर्यसत्यानि इमानि सन्ति—

१—दुःखम्

२—दुःखसमुदयः ( दुःखकारणम् )

३—दुःखनिरोधः ।

४—दुःखनिरोधगामिनी प्रतिपत् ।

आर्यजनाः ( विद्वज्जनाः ) एव एतानि सत्यानि सम्यक्तया जानन्ति, इति हेतोः एतेषां सत्यानां सम्मिलितं नाम आर्यसत्यानि इति अस्ति ।

एतेषु चतुर्थं प्रतिपन्नामकं सत्यम् अष्टाङ्गं वर्तते । तस्य तानि अङ्गानि इमानि सन्ति—

१—सम्यग् ज्ञानम् ( आर्यसत्यानां यथार्थं ज्ञानम् )

२—सम्यक् सङ्कल्पः ( दृढनिश्चयः )

३—सम्यग् वचनम् ( सत्यवचनम् )

४—सम्यक् कर्मान्तः ( हिंसाद्रोहदुराचाररहितं कर्म )

५—सम्यक् आजीवः ( न्याययुक्ता जीविका )

६—सम्यग् व्यायामः ( निरन्तरः प्रयासः )

७—सम्यक् स्मृतिः ( जगदनित्यतायाः सततं स्मरणम् )

८—सम्यक् समाधिः ( पूर्णा एकाग्रता )

भिक्षूणां गृहस्थानाञ्च बौद्धानां कृते पञ्चशीलपालनमतीव आवश्यकं मन्यते । तानि शीलानि इमानि सन्ति—

१—अहिंसा

२—अस्तेयम्

३—सत्यभाषणम्

४—ब्रह्मचर्यम्

५—व्यसनराहित्यम् ।

भिक्षूणां कृते अन्यान्यपि पञ्चशीलानि ह्यावश्यकानि सन्ति । तानि इमानि सन्ति—

१—अपराह्णभोजनम्

२—मालाधारणम्

३—सङ्गीतपरित्यागः

४—सुवर्णरजतपरित्यागः

५—महार्हशय्यापरित्यागः।

एतेषां शीलानां परिपालनेन त्रिविधा प्रज्ञा—श्रुतमयी, चिन्तामयी भावनामयी चेति प्रजायते। प्रज्ञासिद्धौ निर्वाणसिद्धिर्भवति।

इदानीं बौद्धदर्शनस्य प्रधानान् सिद्धान्तान् प्रतिपादयन्तः चत्वारः बौद्धसम्प्रदायाः उपलभ्यन्ते। तेषां क्रमेण नामानि सन्ति—

(१) वैभषिक सम्प्रदायः-बाह्यार्थप्रत्यक्षवादी

(२) सौत्रान्तिकसम्प्रदायः—बाह्यार्थानुमेयवादी

(३) योगाचारसम्प्रदायः—विज्ञानवादी।

(४) माध्यमिक सम्प्रदायः—शून्यवादी

एतेषां निरूपणं सङ्क्षेपमाश्रित्य इदानीं प्रस्तूयते—

**(१) वैभाषिकसम्प्रदायः—**

वैभाषिकाः कथयन्ति यत् इदं नानात्मकं जगत् सत्यं वस्तु वर्तते। अत्रत्यानां वस्तूनामनुभवः प्रत्यक्षज्ञानद्वारा भवति। एते वैभाषिकाः बाह्यमाभ्यन्तरं = (भौतिकं मानसिकञ्च) वस्तु स्वीकुर्वन्ति।

एक एव उपदेष्टा भगवान् बुद्धः भिन्नान् भिन्नान् शिष्यान् भिन्नभिन्नतया उपदिदेश। गुरोरियं भाषा विरुद्धा भाषा। एते इत्थं गुरुम् आक्षिपन्ति, इति कृत्वा एते वैभाषिकाः उच्यन्ते।

केचन विद्वांसः कथयन्ति यत् 'अभिधर्ममहाविभाषा' नामके ग्रन्थे एतेषां सिद्धान्ताः प्रतिपादिताः सन्ति इति हेतोरेतेषां नाम वैभाषिक इत्यस्ति।

(१) ग्राह्याः = निर्विकल्पकज्ञानविषयाः

(२) अध्यवसेयाः—सविकल्पकज्ञानविषयाः

निर्विकल्पकात्मकं प्रत्यक्षं कलनारहितम् अभ्रान्तञ्च भवति, इति कृत्वा प्रमाणम् (यथार्थम्) अस्ति। सविकल्पकात्मकं प्रत्यक्षं कल्पनायुक्तं भ्रान्तञ्च भवति इति कृत्वा अप्रमाणं भवति। अत्र यदि कश्चित् शङ्केत यत् सविकल्पकं प्रत्यक्षम् अप्रमाणं चेत् तादृशेन ज्ञानेन प्रवृत्तानां जनानां यथार्थफलप्राप्तिः कथं भवति ? कथञ्च तत्परिणामतः ज्ञानस्यापि यथार्थत्वं प्रमाणितं भवति ?

अस्याः शङ्कायाः इदं समाधानम्—यथा मणिप्रभां विलोक्य मणिं ग्रहीतुं प्रवृत्तस्य पुरुषस्य काकतालीयन्यायेन मणेः प्राप्तिर्भवति, यथा च मन्त्रौषध्यादिद्वारा काकतालीयन्यायेन रोगशमनं भवति, तथैव सविकल्पकात्मकप्रत्यक्षज्ञानेन प्रवृत्तस्य पुरुषस्य यथार्थफलप्राप्तिर्भवति । अतः, यथार्थफलप्राप्तिमाधारीकृत्य अध्यवसायस्य ( सविकल्पकज्ञानस्य ) यथार्थत्वं प्रमाणितं न भवति ।

एतेषां मते अनुमानप्रमाणं निरर्थकम्, यतः अनुमानार्थमपेक्षिता व्याप्तिः तज्ज्ञानं वा न सम्भवति । वैभषिकसम्प्रदायानुसारं पदार्थास्त्रिविधाः—

१—पञ्चस्कन्धरूपाः

२—द्वादशायतनरूपाः

३—अष्टादशधातुरूपाः ।

वैभाषिकाः रूपसंज्ञावेदनासंस्कारविज्ञाननामकान् पञ्चस्कन्धान् इत्थं प्रतिपादयन्ति—

पञ्चमहाभूतनिर्मितं शरीरं रूपमित्यभिधीयते । कस्यापि वस्तुनः साक्षात्कारः संज्ञा इत्यभिधीयते । संज्ञाजन्यं दुःखं सुखमौदासीन्यं वा वेदना इत्यभिधीयते । पूर्वानुभवजन्या स्मृतेर्हेतुश्च सूक्ष्मा मानसिकी प्रवृत्तिः संस्कार इत्यभिधीयते । चैतन्यं विज्ञानमित्यभिधीयते । तत्र निर्विकल्पकं प्रत्यक्षं विज्ञानम्, नामजात्यादियोजनाविशिष्टं ज्ञानं संज्ञा-इत्ययं विज्ञानसंज्ञयोर्भेदः ।

एतेषां मते द्वादशायतनरूपाः पदार्थाः इमे सन्ति—कायः, पञ्चज्ञानेन्द्रियाणि, धर्मः, पञ्चविषयाश्च । एतेषां मते कायः इन्द्रियरूपः तथा धर्मः विषयरूपः ।

अष्टादशधातवः इमे सन्ति—चक्षुर्विज्ञानधातुः, श्रोत्रविज्ञानधातुः घ्राणविज्ञानधातुः, जिह्वाविज्ञानधातुः कायविज्ञानधातुः, मनोविज्ञानधातुः, पूर्वोक्तानि द्वादशायतनानि च ।

**( २ ) सौत्रान्तिकसम्प्रदायः**

भगवतो बुद्धस्य ये शिष्या बुद्धं सूत्रस्य=संसारपरम्परायाः अन्तं पृष्टवन्तः, ते सौत्रान्तिकाः कथ्यन्ते स्म । तेषामेव सम्प्रदायः सौत्रन्तिकसम्प्रदायः इति प्रसिद्धिं प्राप्तः ।

सौत्रान्तिकसम्प्रदायः ज्ञानातिरिक्तान् बाह्यपदार्थानस्तित्वशालिनः स्वीकरोति । ते पदार्थाः प्रत्यक्षविषया न भवन्ति, अपि तु अनुमेया एव ।

जनाः आवश्यकतायामुपस्थितायां सत्यां बाह्यमेव वस्तु गृह्णन्ति आन्तरिकस्य ज्ञानात्मक वस्तुनः उपेक्षां कुर्वन्ति। अतः, बाह्यं वस्त्वपि स्वीकार्यं भवति। तच्च ज्ञेयं वस्तु ज्ञानेन अनुमीयते। उक्तञ्च—

**भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः।**
**हेतुत्वमेव च व्यक्तेर्ज्ञाताकारार्पणक्षमम्॥**

एतेषां मतेन बाह्यवस्तूनाम् अस्तित्वम् अवश्यमेव स्वीकार्यम्। बाह्यवस्तूनामाकारः भिन्नः-भिन्नः भवति इति हेतोः तेषां ज्ञानमपि भिन्नभिन्नाकारं भवति। एभिः भिन्नभिन्नाकारैः ज्ञानैः (हेतुभिः) बाह्यवस्तूनां सत्ता अनुमीयते।

**( ३ ) योगाचारसम्प्रदायः—**

अयं सम्प्रदायः विज्ञानमेव सत्यं पदार्थं स्वीकरोति। विज्ञानस्यैव पर्यायः चित्तं मनः विज्ञप्तिश्च इति त्रितयम् अस्ति। विज्ञानमेव यदा चेतनक्रियया सह सम्बद्धं भवति तदा मनः इत्युच्यते तथा यदा तत् विषयाणां ग्रहणे हेतुः भवति, तदा विज्ञानं विज्ञप्तिर्वा उच्यते।

एतेषां मते नानाविधैरुपचारैर्युक्तमिदं जगत् न वास्तवम्, अपि तु केवलं मनोविलासः अस्ति। एते उपचाराः इमे सन्ति—जीवः, जन्तुः, आत्मा, मनुष्यश्च। इमे आत्मोपचाराः सन्ति। स्कन्धः, धातुः आयतनम्, रूपम्, वेदना, संज्ञा, संस्कारः, विज्ञानञ्च-एते धर्मोपचाराः सन्ति। एतेषामुपचाराणां सत्ता विज्ञानात् पृथक् नास्ति।

एतेषां मते वैभाषिकसम्मतानि चक्षुर्विज्ञानादिरूपाणि षड् विज्ञानानि, मनोविज्ञानम्, आलयविज्ञानञ्च इति मिलित्वा अष्टविज्ञानानि सन्ति।

आलयविज्ञानम् आत्मस्थानीयं सदपि परिवर्तनशीलं वर्तते। अस्य निरन्तरः प्रवाहः प्रचलति। अत एव कालत्रयवर्तिनां पदार्थानां ज्ञेयता प्रमाणिता भवति। इदमत्र अवधेयं यत् ज्ञेयं वस्तु कल्पितं भवति, न परमार्थरूपम्।

**( ४ ) माध्यमिकसम्प्रदायः—**

अयं सम्प्रदायः 'शून्यमेव परमार्थसत्यं वस्तु वर्तते'-इति मन्यते। इदं शून्यम् अभावरूपं नास्ति, अपितु अनिर्वचनीयं तत्त्वं वर्तते, यत् न सत् न असत् न सदसत् न च एताभ्यां भिन्नम्।

अतएव

**"चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः।"**

इति विद्वदुक्तिः।

इदमेव शून्यम् अद्वैतं परमार्थतत्त्वं तथागम् उच्यते। अस्य प्राप्तये सम्यक् सम्बोधिः अपेक्षितः। सम्यक् सम्बोधये ज्ञानं, शीलं, क्षान्तिः वीर्यं समाधिः तथा प्रज्ञा–इत्येतानि साधनानि अपेक्षितानि सन्ति। एभिः साधनैः यदा निर्मला प्रज्ञा लभ्यते, तदा तस्याः चरमोत्कर्षः बुद्धत्वं कथ्यते।

एतावत्पर्यन्तं विचारितेषु एषु चतुर्षु सम्प्रदायेषु वैभाषिकसम्प्रदायः हीनयानेन सह सम्बद्धः, अन्ये त्रयः महायानेन सह सम्बद्धाः सन्ति।

हीनयानवादिनः कथयन्ति यत् दुःखदुःखता, संस्कारदुःखता तथा विपरिणामदुःखता—इत्यनेन दुःखतात्रयेण सर्वे मानवाः पीडिताः सन्ति। एताभ्यः दुःखताभ्यः विमुक्तिरेव निर्वाणं वर्तते।

महायानमतेन निर्वाणं दुःखाभावरूपंनास्ति, अपितु सुखरूपं वर्तते।

एतावत्पर्यन्तं प्रस्तुतस्य विचारस्य उपसंहारः अनेन पद्येन विधीयते—

**मुख्यो माध्यमिको विवर्तमखिलं शून्यस्य मेने जगद्**
**योगाचारमते तु सन्ति मतयस्तासां विवर्तोऽखिलः॥**
**अर्थोऽस्ति क्षणिकस्त्वसावनुमितो बुद्ध्या च सौत्रान्तिकः**
**प्रत्यक्षं क्षणभङ्गुरं च सकलं वैभाषिको भाषते॥**

—:०:—

## ख्यातिवादः

'चक्षिङः ख्याञ्' इत्यनेन सूत्रेण व्यक्तवागर्थकस्य चक्षिङ्धातोः 'ख्या' इत्यादेशं कृत्वा अथवा प्रकथनार्थकात् 'ख्या' धातोः क्तिन् प्रत्यये कृते ख्यातिशब्दः निष्पन्नो भवति। यद्यपि 'ख्याति' शब्दस्य व्युत्पत्तिलभ्योऽर्थो, ज्ञानं वर्तते, तथापि भारतीयदर्शनेषु 'ख्याति' शब्दः भ्रमज्ञाने प्रातिभासिकज्ञाने वा प्रयुज्यते।

तत्रापि भ्रमज्ञानस्थले कीदृशी प्रतीतिर्भवति? इत्येतं विषयमधिकृत्य तेषां तेषां दर्शनशास्त्राणां मतभेदो वर्तते। उक्तमपि—

**आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा।**
**तथानिर्वचनख्यातिरित्येतत् ख्यातिपञ्चकम्॥**

( १ ) एतेषां वादानां मध्ये आत्मख्यातिवादः विज्ञानवादिनां बौद्धानां वर्तते । ते कथयन्ति–सर्वं दृश्यमानं जगद् वस्तुविज्ञानरूपम् । आत्मा च आलयविज्ञानरूपः । अत एव, भ्रमस्थलेऽपि शुक्तिरजतं न भासते, अपि तु वस्तुविज्ञानमेव ।

( २ ) असत्ख्यातिवादः शून्यवादिनां बौद्धानां वर्तते । ते कथयन्ति—अनिर्वचनीयं भावरूपं शून्यमेव सर्वत्र भासते । अतएव भ्रमस्थलेऽपि शून्यमेव भासते ।

( ३ ) अख्यातिवादः प्राभाकरमीमांसकानां वर्तते । तेषामयमभिप्रायः—अख्यातिर्नाम भेदज्ञानस्य अभावः भेदाग्रहो वा । अतस्मिंस्तद्बुद्धिरूपः, अतद्रूपप्रतिष्ठज्ञानरूपः, तदभाववति तत्प्रकारकज्ञानरूपो वा भ्रमः ( भ्रम-ज्ञानं वा) नास्त्येव । शुक्तिरजतस्थले मृगमरीचिस्थले वा एकं ज्ञान नास्ति, अपि तु 'इदम्' इत्येकं ज्ञानम्, 'रजतम्' इत्यन्यत् ज्ञानम् । 'इदम्' इत्याकारकं ज्ञानं चक्षुरिन्द्रियस्य पुरोवर्ति पदार्थस्य च सन्निकर्षेण जायमानं प्रत्यक्षं ज्ञानं भवति, तच्च यथार्थम्, 'रजतम्' इति ज्ञानं स्मृत्यात्मकं भवति, तदपि यथार्थम्, यतः, तदपि पूर्वानुभूतस्य हट्टस्थरजतस्य अनुभवस्य संस्कारस्य उद्बोधेन जायते ।

अत्रायं प्रश्नः उदेति यत् एतादृशस्थले कश्चन जनः शुक्तिं रजतं मत्वा तां ग्रहीतुं कुतः प्रवृत्तो भवति ?

अस्य प्रश्नस्य इदमुत्तरं यत् उभयोः ज्ञानयोर्भेदो न गृह्यते ( ज्ञायते ) तेन जनेन, इति हेतोः सः तां शुक्तिं ग्रहीतुं प्रवृत्तो भवति । अयमेव अख्याति-वादः प्राभाकराणाम् ।

( ४ ) अनिर्वचनीयख्यातिवादः वेदान्तिनां सम्मतः सिद्धान्तः । उप-निषदि स्वप्नवर्णनप्रसङ्गे कथितं वर्तते—'न तत्र रथा न रथयोगाः, अथ रथान् रथयोगान् पथः सृजते । अत्र 'सृजते' इत्यनेन पदेन इदमायाति यत् स्वप्नकाले 'प्रातिभासिकम् ( प्रातीतिकम् ) रथादिकम् उत्पन्नं भवति । तत् जाग्रदवस्थायां नास्ति । अतः, असत्, स्वप्नकाले भासते, अतः, सदपि यथा-कथञ्चित् वक्तुं शक्यते । न च तत् सदेव, असदेव वा । अतः, अनिर्वचनीयं स्वीक्रियते । तथैव भ्रमस्थलेऽपि प्रातिभासिकं रजतं ( अनिर्वचनीयं रजतं ) भवति, तद्विषयकं ज्ञानमपि प्रातिभासिकम् ( अनिर्वचनीयं ) भवति ।

(५) अन्यथाख्यातिवादो नैयायिकानां सम्मतः । ते कथयन्ति—इन्द्रियदोषेण वस्तुदोषेण वा एतादृशस्थले प्रतीतिः भवति, तदभाववति तत्प्रकारकं

(रजतत्वाभाववत्यां शुक्तौ रजतत्वप्रकारकं शुक्तिविशेष्यकं) ज्ञानं भवति। यथा पीतरोगग्रस्तस्य जनस्य श्वेतशङ्खेऽपि 'शङ्खः पीतः' इत्याकारकं ज्ञानं भवति। अत्रायं क्रमः–शुक्तौ दृष्टायां चाकचक्यात् हेतोः पूर्वदृष्टस्य रजतस्य धर्माणां स्मरणं भवति। ततश्च रजतस्य अलौकिकं प्रत्यक्षं भवति। ततश्च रजतस्य धर्माणां शुक्तौ आरोपः भवति। ततो भ्रमात्मकं ज्ञानं भवति। वैशेषिका अपि नैयायिकाभिमततुल्याम् अन्यथाख्यातिमेव स्वीकुर्वन्ति।

सदसत्ख्यातिवादः साङ्ख्यानां सम्मतः। 'इदम्' इत्याकारकं ज्ञानं सत्। 'रजतम्' इत्याकारकं ज्ञानम् असत्। अतः, तत् 'सदसत्' (सां०सू०५।५६)। साङ्ख्यप्रवचनभाष्ये विज्ञानभिक्षुमहोदयः कथयति—स्वरूपेण अबाधः सर्ववस्तूनां नित्यत्वात्। संसर्गतस्तु बाधः सर्ववस्तूनां चैतन्ये अस्ति।

भाट्टास्तु वेदान्तितुल्याम् अनिर्वचनीयख्यातिमङ्गीकुर्वन्ति।

एतेषां वादानां मध्ये प्राभाकरमतमेव उचितं प्रतिभाति। यतः, प्रातिभासिकस्थले पण्डितानामपि प्रवृत्तिर्भवति। पण्डितानां प्रतिष्ठा तदैव सुरक्षिता स्यात्, यदा तेषामाचरणस्य औचित्यं प्रतिपादितं स्यात्। यदि तेऽपि सामान्यजनवत् मिथ्यापदार्थे प्रवृत्ता भवन्ति, इति स्वीक्रियते, तर्हि सामान्यजनेभ्यस्तेषु को विशेषो भवेत्?

अतः, मीमांसकसम्मतेन स्वतः-प्रामाण्यवादेन उभयवादिसम्मतया प्रतीत्या च अख्यातिवाद एव स्वीकरणीयः।

—:०:—

# भारतीयदर्शनशास्त्रे पाश्चात्यदर्शनशास्त्रे च ईश्वरस्य स्वरूपमुपयोगिता च

सकले अपि जगति सर्वे प्राणिनः सुखम् इच्छन्ति ते सर्वे सुखं प्राप्तुं प्रयत्नम् अपि कुर्वन्ति। तस्मिन् अवसरे यदि कश्चित् अन्यः प्राणी तस्मिन् प्रयत्ने बाधां करोति, तर्हि सुखस्य इच्छुकः प्राणी रुष्टो भवति। सः तं बाधकं निवारयति।

जीवने अनेकवारम् एतादृशी अपि दशा आयाति, यस्यां कष्टनिवारणार्थं कोऽपि जनः समर्थो न भवति। तस्य कष्टस्य निवारणार्थं जनेन क्रियमाणाः सर्वेऽपि उपाया यदा निष्फला भवन्ति, यदा च तस्य जनस्य किमपि बुद्धि-कौशलं सफलं न भवति, तदा सः कमपि समर्थं सहायकं कामयते।

सः सहायकः कः? इति जिज्ञासायाम् उत्तरमस्ति—स सहायकः ईश्वरः एव।

स ईश्वरः दयालुः, कर्तुमकर्तुमन्यथा कर्तुञ्च समर्थः सच्चिदानन्दरूपः अकुतोभयश्च वर्तते।

श्रीमद्भागवतेऽपि उक्तमस्ति—

**मद्भयाद्वाति वातोऽयं सूर्यस्तपति मद्भयात्।**

श्रीमद्भगवद्गीता कथयति—

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।**

सर्वाण्यपि भारतीय दर्शनशास्त्राणि कानिचन पाश्चात्यदर्शनान्यपि ईश्वरस्य सत्तां स्वीकुर्वन्ति। तत्र चार्वाकाः कथयन्ति—

सर्वसमर्थः प्रभुरेव ईश्वरः। सच निग्रहानुग्रहौ करोति।

जैनाः कथयन्ति—अर्हन् एव ईश्वरः।

बौद्धाः कथयन्ति—बुद्ध एव ईश्वरः।

इदमपि अवधेयमस्ति यदिमे दार्शनिका ईश्वरं निषिध्य निषेधमुखेन तं स्वीकुर्वन्ति। नैयायिकाः कथयन्ति—पृथिव्यादिद्रव्याणाम् (अनित्याकारस्य जगतः) कर्ता परमाणुद्वयसंयोगस्य च कर्ता ईश्वरः। यथा कश्चन लौकिकः पुरुषः गृहादीनां कर्ता भवति, तथा क्षित्यङ्कुरादीनामपि कश्चित् कर्ता भवितुमर्हति। स कर्ता अस्मदादयः भवितुं नार्हन्ति, यतः, अस्माकं निर्माण-शक्तिः परिमिता अस्ति।

अस्य अनुमानस्य रूपमिदम्—क्षित्यङ्कुरादिकं कार्यं कर्तृजन्यम्, कार्यत्वात्, घटवत्।

यद्यपि ईश्वरः जगतः निमित्तकारणमस्ति तथापि परवर्तिभिर्विविधैः न्यायाचार्यैः सः सर्वशक्तिमान्, सर्वसमर्थः स्वचिन्तकानामेकविंशतिदुःखध्वंस-रूपस्य मोक्षस्य प्रदाता इति च अङ्गीकृतः। उदयनाचार्यः ईश्वरविषये अनेकानि प्रमाणानि उपस्थापयति।

ईश्वरस्य विषये तर्कभाषाकारः केशवमिश्रः कथयति—मुमुक्षोर्ध्यायिनो ध्यानपरिपाकवशात् साक्षात्कृतात्मनः एकविंशतिप्रभेदभिन्नदुःखहानिर्मोक्षः ।

वैशेषिकदर्शने सर्वप्रथममाचार्यकणादेन ईश्वरः निर्दिष्टः अस्ति । प्रशस्तपादभाष्येऽपि अयमेव पक्षः आचार्येण प्रशस्तपादेन समर्थितः स्वीकृतश्चास्ति । विशेषनामकं पदार्थविशेषं स्वीकुर्वाणः अन्नम्भट्टः ईश्वरस्य सत्तां स्वीकुर्वन् कथयति—

**निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।**
**बालानां सुखबोधाय क्रियते तर्कसङ्ग्रहः ॥**

सः अग्रेऽपि कथयति—'आत्मा द्विविधः जीवात्मा परमात्माचेति । तत्र सर्वज्ञः परमात्मा एक एव ।

एभिः प्रमाणैः सिद्ध्यति यत् न्यायदर्शनमिव वैशेषिकदर्शनमपि दृश्यमानं जगत् ईश्वरेण सञ्चालितं नियन्त्रितञ्च मन्यते ।

( परवर्ति ) साङ्ख्यदर्शनमपि ईश्वरं स्वीकरोति । साङ्ख्यदर्शने ईश्वरस्य स्वरूपं साक्षिदीपसदृशमस्ति । यथा दीपः साक्षित्वेन रूपेण उत्तमानि अधमानि च कार्याणि कर्तुं मानवस्य साहाय्यं करोति, तथैव ईश्वरः अपि पुरुषं ( जीवं ) तत्तत्कर्मानुसारं प्रेरयति ।

श्रीमद्भगवद्गीता साङ्ख्यं योगञ्च एकत्वेन प्रतिपादयति—

**'साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः' ।**

जगदाविर्भावे ईश्वरस्य साक्षात्सम्बन्धे असत्यपि ईश्वरस्य उपयोगिता अस्ति, यतः ईश्वरः एव स्वसन्निधानेन पुरुषस्य प्रकृत्याश्च अनादिसंयोगम् आदियुक्तमिव कृत्वा जगतः आविर्भावं सम्पादयति । वाचस्पतिमिश्रः कपिलाय महामुनये प्रणामं करोति ।

योगदर्शनमपि ईश्वरं स्वीकरोति । एतद् दर्शनशास्त्रमीश्वरं षड्विंशतितमं पृथक् तत्त्वं मन्यते । ईश्वरस्वरूपविषये पातञ्जलयोगसूत्रं वर्तते—

**क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः** ( यो० सू० १।२४ )

पातञ्जलयोगसूत्रोपरि ( भोजराजेन ) विरचितायां वृत्तौ भोजराजः कथयति—**स भगवानीश्वरः प्रसन्नः सन् अन्तरायरूपान् क्लेशान् परिहृत्य समाधिं सम्बोधयति** । ( भोजवृत्ति :-२।४५ )

योगशास्त्रम् ईश्वरं तारकज्ञानस्य आद्युपदेष्टारं स्वीकरोति। पूर्वमीमांसकाः कथयन्ति—

पुरुषेण कृते यज्ञे नष्टे सति तदुत्पन्नमपूर्वं सुरक्षितं तिष्ठति। किञ्च येन कर्त्रा स यज्ञः अनुष्ठितः स एव तस्य फलं प्राप्नोति, न इतरः।

उत्तरमीमांसायामपि–उपनिषदः, भगवद्गीता, ब्रह्मसूत्राणि चेति प्रस्थानत्रयी ईश्वरं हिरण्यगर्भापेक्षया विराजोऽप्यपेक्षया उन्नततरकोटौ प्रतिष्ठापयति।

आचार्यशङ्करमतेन शुद्धसत्त्वोपाधिविशिष्टं चैतन्यमीश्वरः अस्ति।

अन्ये रामानुजाचार्याः वल्लभाचार्याः अन्ये अपि आचार्याः ईश्वरमाराध्यरूपेण स्वीकुर्वन्ति।

इदानीं पाश्चात्यदर्शने ईश्वरस्वरूपं कीदृशमिति विचार्यते—

अरस्तूमहोदयः कथयति–द्रव्यस्य तथा तत्स्वरूपस्य मूलाधारः ईश्वरः अस्ति। अगस्टाइन् कथयति–विश्वस्मिन् पापात् दुःखाच्च रक्षणस्य उपायः ईश्वरस्य करुणा एव अस्ति।

थामस् एक्विनस् कथयति—ईश्वरः ज्ञानस्वरूपः अस्ति।

रेने देकार्तमहोदयः तत्त्वत्रयम्—ईश्वरः, चित्, अचित् च–स्वीकरोति—

स्पिनोजामहोदयः कथयति—द्रव्यमीश्वरः एव अस्ति।

लाइबिनित्जः कथयति—आत्मनः चतस्रः चित्तभूमयः सन्ति–। अतः, आत्मा स्वचेतनः, चेतनः, उपचेतनः, अचेतनः च अस्ति।

जान लाकः त्रिविधानि तत्त्वानि द्रव्याणि वा स्वीकरोति। तानि द्रव्याणि–ईश्वरः, आत्मा जड़तत्त्वञ्च इति–सन्ति।

बार्कले महोदयः कथयति—ईश्वरः यत्र कुत्रापि अस्ति, अतएव अस्मासु ईश्वरस्य अन्तर्बोधः अस्ति। ईश्वरः अनन्तः परमः आत्मा च अस्ति। सः सर्वेषामपि कार्याणां कारणविहीनं कारणमस्ति।

ईश्वरं धर्मदर्शनाचार्या अपि स्वीकुर्वति। तेषु ख्रिस्तीयाः ख्रिस्तमीश्वरं मन्यन्ते।

मोहम्मदाः अल्लामीश्वरं मन्यन्ते।

यहूदिनः सगुणमीश्वरं मन्यन्ते।

पारसीकाः सूर्याग्निरूपमीश्वरं मन्यन्ते।

आर्यसमाजिनः निर्गुणं निराकारं सर्वसमर्थञ्च ( वेदम् ) ईश्वरं मन्यन्ते

विश्वमानवतावादिनः मानवमात्रमीश्वरं मन्यन्ते ।

वयं तु सर्वाधिष्ठानरूपं जड़चेतनव्यापकमन्तर्यामिणं सर्वसमर्थं दयालुञ्च ईश्वरं मन्यामहे ।

अन्ते इदमेव शुभाशंसनं विधीयते—

**यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो**
**बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः ।**
**अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः**
**सोऽयं नो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥**

## सन्दर्भग्रन्थाः

( १ ) कठोपनिषद
( २ ) श्रीमद्भगवद्गीता
( ३ ) न्यायकुसुमाञ्जलिः
( ४ ) साङ्ख्यतत्त्वकौमुदी
( ५ ) भोजवृत्तिः
( ६ ) ग्रीकदर्शन-डा० छोटेलाल त्रिपाठी
( ७ ) मध्ययुगीन दर्शन-डा० छोटेलाल त्रिपाठी ।
( ८ ) आधुनिक पाश्चात्यदर्शन की भूमिका-प्रो० संगमलाल पाण्डेय ।

# नैयायिकमतानुसारिकारणविचारः

समग्रे जगति कारणं विना किमपि कार्यं नोत्पद्यते। कारणं कार्यात् प्राक् तिष्ठति। कार्यञ्च कारणानन्तरं भवति। अत एव नैयायिका वदन्ति—कारणे कार्यमुत्पत्तेः प्राक् असत्। (कार्यापेक्षया) अनन्यथासिद्धनियतपूर्ववृत्तित्वं कारणत्वम्, अनन्यथासिद्धकारणसामग्रीसत्त्वे पश्चाद्भावित्वं कार्यत्वम्। इदमत्रावधेयं यत् पारिमाण्डल्यापरपर्यायि अणुपरिमाणं कस्यापि पदार्थस्य कारणं न भवति। तच्च परिमाणं परमाणोः—द्व्यणुकस्य, मनसश्च भवति। तत्र हेतुरयं यत् प्रत्येकं परिमाणं स्वसमानजातीयोत्कृष्टपरिमाणजनकं नियमेन भवति, ततश्च यदि अणुपरिमाणं परिमाणान्तरस्य कारणं भवेत्, तर्हि तज्जन्यस्य परिमाणान्तरस्य अणुतरत्वं समापतेत्। एवमेव परममहत् परिमाणम्, अतीन्द्रियसामान्यं, विशेषाश्च कस्यापि कारणं न भवन्ति। अयमत्र विशेषः—योगिकृतप्रत्यक्षे कस्यापि विषयस्य कारणत्वं न भवति।

कारणलक्षणे 'अनन्यथासिद्धेति यद् विशेषणं दत्तमास्ते तत्र अन्यथासिद्धं किमिति जिज्ञासायामुच्यते—

येन विनापि कार्यं सिद्धं भवति, तत् अन्यथासिद्धं भवति। अयमभिप्रायो यत् कार्योत्पत्तेः प्राक् अवश्यक्लृप्तनियतपूर्ववर्तिनः भिन्नं सर्वं वस्तुजातमन्यथासिद्धम्। तच्च अन्यथासिद्धं पञ्चविधम्—

१—यत्कार्यं प्रति कारणस्य पूर्ववृत्तिता येन स्वरूपेण ज्ञायते, तत्कार्यं प्रति तत्स्वरूपं (तत्स्वरूपबोधको धर्मः) अन्यथासिद्धम्। यथा—घटं प्रति दण्डात्मकस्य कारणस्य पूर्ववृत्तिता दण्डत्वेन रूपेण (स्वरूपेण) ज्ञायते, अतः, घटात्मकं कार्यं प्रति दण्डत्वमन्यथासिद्धम्।

२—यस्य पदार्थस्य यत् कार्यं प्रति स्वातन्त्र्येण अन्वयव्यतिरेकौ न स्तः, अपि तु कारणमादाय एव अन्वयव्यतिरेकौ स्तः, सोऽपि (गुणः) पदार्थः तत्कार्यं प्रति अन्यथासिद्धः। यथा—घटं प्रति दण्डरूपमन्यथासिद्धम्। यतः, दण्डरूपस्य घटं प्रति अन्वयव्यतिरेकौ स्वकारणं दण्डमादाय एव वर्तेते, न तु स्वातन्त्र्येण, अतः, दण्डरूपं दण्डत्वमिव अन्यथासिद्धम्।

३—अन्यत् कार्यं प्रति पूर्ववृत्तित्वं (कारणत्वं) निश्चित्य एव यस्य पदार्थस्य यत् कार्यं प्रति पूर्ववृत्तित्वं निश्चीयते, स पदार्थः तत् कार्यं प्रति

अन्यथासिद्धः। यथा—घटं प्रति आकाशः। आकाशः नित्यः व्यापकश्च। अतः, कार्यमात्रं प्रति नियतपूर्ववर्ती वर्तते, ततश्च घटं प्रति अपि नियतपूर्ववर्तित्वेन कारणं भवितुमर्हति। तच्च कारणम् आकाशत्वेन रूपेण स्वीकार्यम्, तदाकाशत्वं शब्दसमवायिकारणत्वरूपं वर्तते, अनेन प्रकारेण आकाशः शब्दस्य जनकः ( समवायिकारणम् ) इति सिद्ध्यति। तदनन्तरम् अर्थात् आकाशस्य शब्दं प्रति जनकत्वं निश्चित्य एव घटादिकार्यं प्रति जनकत्वं निश्चीयते। अतः, आकाशः घटं प्रति ( शब्दातिरिक्तं जन्यं पदार्थं प्रति ) अन्यथासिद्धः।

अस्मिन् विषये मुक्तावल्यादौ बहु चर्चितं वर्तते सूरिभिः। विस्तरभयात् तदत्र न चर्च्यते।

४—यत्कार्यजनकं प्रति पूर्ववृत्तित्वं निश्चित्यैव यस्य पदार्थस्य यत्कार्यं प्रति पूर्ववृत्तित्वं निश्चीयते सः पदार्थः तत्कार्यं प्रति अन्यथासिद्धः। यथा—कुलालपिता घटं प्रति अन्यथासिद्धः। इदमत्रावधेयं यत् यदि कुलालपिता कुलालपितृत्वेन रूपेण घटं प्रति कारणं मन्येत, तर्हि सः घटात्मकं कार्यं प्रति अन्यथासिद्धो भवेत्, किन्तु यदि सः कुलालत्वेन रूपेण घटं प्रति कारणं मन्येत, तर्हि तु इष्टापत्तिः।

५—कार्योत्पत्तेः पूर्वक्षणे अवश्यमेव ( नियमेन ) विद्यमानैः दण्डचक्रचीवरकुलालादिभिः घटोत्पत्तेः सम्भवे, तदतिरिक्तः सर्वोऽपि पदार्थः अन्यथासिद्धः। यथा—रासभादिः। यद्यपि यं कञ्चिद् घटं (घटव्यक्ति) प्रति रासभस्य नियतपूर्ववृत्तित्वं भवितुमर्हति, तथापि घटजातीयं प्रति तस्य नियतपूर्ववृत्तित्वं न भवति, अतः, रासभः तत्सदृशा अन्येऽपि पदार्थाः घटं प्रति अन्यथासिद्धाः। अत एव, द्रव्यप्रत्यक्षे महत्परिमाणं कारणम्, अनेकद्रव्यवत्त्वमन्यथासिद्धम्। यदि द्रव्यप्रत्यक्षे अनेकद्रव्यवत्त्वं कारणं स्वीक्रियेत, तर्हि गौरवदोषो भवेत्, यतः, महत्त्वत्वजातेरपेक्षया अनेकद्रव्यवत्त्वं गुरुभूतो धर्मो वर्तते। गुरुभूतधर्मावच्छिन्नस्य पदार्थस्य कारणत्वे स्वीक्रियमाणे गौरवदोषो भवति, लघुभूतधर्मावच्छिन्नस्य पदार्थस्य कारणत्वे स्वीक्रियमाणे लाघवं भवति।

उक्तेषु पञ्चविधेषु अन्यथासिद्धेषु ( दण्डत्व–दण्डरूप-गगन-कुलालपितृ-रासभात्मकेषु ) पञ्चमः अन्यथासिद्धः आवश्यकः, यतः, तेनैव इतरे सर्वेऽपि अन्यथासिद्धाः गतार्थाः भवन्ति।

**तदिदं कारणं त्रिविधम्**—समवायि, असमवायि, निमित्तञ्च।

**समवायिकारणम्—**

यत्र समवायसम्बन्धेन कार्यमुत्पद्यते तत् समवायिकारणम्। यथा—कपालौ घटस्य समवायिकारणम्। तन्तवः पटस्य समवायिकारणम्।

अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्य-विशेषयोश्च यः सम्बन्धः स समवायः। समवायः एकः नित्यश्च पदार्थः।

**असमवायिकारणम्—**

समवायसम्बन्धेनसमवायिकारणे विद्यमानं सत् तत्कार्यस्य जनकम् असमवायिकारणम्। यथा—कपालद्वयसंयोगो घटस्य असमवायिकारणम्। यतः, कपालद्वयसंयोगो घटस्य समवायिकारणे कपालद्वये विद्यमानः सन् घटस्य जनकोऽस्ति। इदमत्रावधेयं यत् तत्तत्कार्यसमवायिकारणलक्षणे तत्तद्भिन्न-मिति विशेषणं देयम्। यथा—पटासमवायिकारणलक्षणे तुरीतन्तुसंयोग-भिन्नत्वे सति पटसमवायिकारणे (तन्तौ) विद्यमानं सत् पटजनकम् पटस्य असमवायिकारणम् इति। तुरीतन्तुसंयोगः तुरीपटसंयोगं प्रति तु असमवायि-कारणं भवत्येव। एवं प्रथमवेगादिकमपि द्वितीयवेगस्पन्दादीनामसमवायि-कारणं भवत्येव। आत्मनः विशेषगुणा ज्ञानेच्छादयः (अष्टौ) कस्यापि पदार्थस्य असमवायिकारणं न भवन्ति, अतः, असमवायिकारणस्य लक्षणे 'ज्ञानादि-भिन्नम्' इति विशेषणमपि देयम्।

समवायिकारणे असमवायिकारणं द्विविधेन रूपेण तिष्ठति। क्वचित् कार्येण सह एकस्मिन् अर्थे (समवायिकारणे) तिष्ठति। यथा—कपालसंयोगः घटेन सह कपाले तिष्ठति। क्वचित् कारणेन सह एकस्मिन् अर्थे (समवायि-कारणे) तिष्ठति। यथा—घटरूपं प्रति असमवायिकारणं कपालरूपं कपाले घटेन सह तिष्ठति। इयं स्थितिः क्वचित् समवायसम्बन्धेन क्वचिच्च स्वसम-वायिसमवेतत्वसम्बन्धेन भवति।

**निमित्तकारणम्—**

समवाय्यसमवायिभिन्नं कारणं निमित्तकारणम्। यथा—तुरीवेमादिकं पटस्य निमित्तकारणम्। ईश्वरः, तज्ज्ञानेच्छाकृतयः, देशः, कालः, अदृष्टम्, प्रागभावश्च कार्यमात्रं प्रति निमित्तकारणानि भवन्ति। कारणसामग्रीसत्त्वेऽपि क्वचित् कार्यानुत्पत्तेर्दर्शनात् तादृशस्थले कार्योत्पत्त्यर्थं प्रतिबन्धकाभावोऽपि कारणम्।

अयमत्र विशेषः—ये साङ्ख्यादयो दार्शनिकाः उपादानं निमित्तञ्चेति कारणद्वयमेव मन्यन्ते, ते असमवायिकारणं निमित्तकारणात् पृथक् न स्वीकुर्वन्ति। किञ्च नैयायिकानां सम्मतं समवायिकारणमुपादानरूपं यथा-कथञ्चित् स्वीकर्तुं शक्यते। वस्तुतस्तु उपादानं मृदादयः कार्पासादयः समवायि कारणरूपात् कपालात् तन्तोश्च भिन्नाः इति सुधीभिरूह्यम्।

—:०:—

## सत्कार्यवादः

सृष्टेः प्राक् समग्रायाः सृष्टेः कारणभूतं तत्त्वं किमासीत्? तत् तत्त्वं सद्रूपम्, असद्रूपम्, सदसद्रूपं वा आसीत्? तस्मात् जायमानं सृष्टिरूपं कार्यं स्वोत्पत्तेः पूर्वमनन्तरञ्च सद्रूपम् असद्रूपं सदसद्रूपं वा अस्ति। इत्येतस्मिन् विषये भारतीयदर्शनशास्त्रैः बहु विचारितं विवेचितञ्च।

यद्यपि सर्वैरपि भारतीयदार्शनिकैः यस्मिन् कस्मिन्नपि रूपे कार्य-कारणभावः स्वीकृतोऽस्ति, तथापि अस्य कार्यकारणभावस्य स्वरूपं कीदृशम्? अस्मिन् विषये दार्शनिकानां बह्व्यः विप्रतिपत्तयः सन्ति। शून्यवादिनो बौद्धाः मन्यन्ते यत् (भावात्मकात्) शून्यात् सत् जगत् जायते। विवर्त-वादिनः अद्वैतवेदान्तिनः मन्यन्ते यत् एकस्य सतः (ब्रह्मणः) विवर्तः समग्रं जगत्, एतच्च जगत् न वस्तुसत्। नैयायिका वैशेषिकाश्च मन्यन्ते यत् सतः (स्वोत्पत्तेः प्राक्) असत् जगत् जायते।

साङ्ख्यास्तु 'सतः सत् जायते' इति सिद्धान्तं स्वीकुर्वन्ति। आचार्य-वाचस्पतिमिश्रमहोदयाः शून्यवादिबौद्धमतं खण्डयन्तः कथयन्ति-**यद्यपि बीज-मृत्पिण्डादिप्रध्वंसानन्तरमङ्कुरघटाद्युत्पत्तिरुपलभ्यते, तथापि न प्रध्वंसस्य कारणत्वम्, अपि तु भावस्यैव बीजाद्यवयवस्य। अभावात्तु भावोत्पत्तौ, तस्य सर्वत्र सुलभत्वात् सर्वदा सर्वकार्योत्पादप्रसङ्गः।** (साङ्ख्यतत्त्वकौमुदी ९ का० व्याख्या)।

प्रपञ्चानुभवस्य असति बाधके मिथ्यात्वं वक्तुं न युक्तमिति वेदान्त-सिद्धान्तोऽपि नास्ति विचारसहः।

यदि कार्यं कारणव्यापारात् पूर्वमसत्, तर्हि कार्यस्य सत्त्वं न केनापि चतुरेणापि पुरुषेण कर्तुं शक्यते, अतः, अस्मिन् विषये न्यायसिद्धान्तोऽपि उपेक्षणीयः।

पारिशेष्यात् सत्कार्यवाद एव उचितः। सत्कार्यवादानुसारं घटपटादिरूपं कार्यं स्वोत्पत्तेः प्राक् अपि स्वीये सद्रूपे कारणे सद्रूपमेव (अव्यक्तं) तिष्ठति। तदेव सहकारिकारणेषु उपस्थितेषु सत्सु स्वरूपं धारयति (व्यक्तीभवति) व्यपदिश्यते च।

श्रुतिरपि सत्कार्यवादं प्रतिपादयति—

**'सदेव सोम्येदमग्र आसीत्'** (छान्दोग्य० ६।२)

श्रीमद्भगवद्गीतापि कथयति—

**'नासतो विद्यते भावो नाभावो विद्यते सतः'**

(श्रीमद्भगवद्गीता अ० २ श्लो० १६)

साङ्ख्याभिमता प्रधानसिद्धिरपि सत्कार्यवादसिद्धावेव भवितुमर्हति। अतः; आचार्येश्वरकृष्णैस्तदनुसारं वाचस्पतिमिश्रमहोदयैरपि युक्तयः प्रदत्ताः। इदानीं तासामेव विस्तरः क्रियते—

**असदकरणात्—**

असतः अर्थात् उत्पत्तेः प्राक् अविद्यमानस्य पदार्थस्य उत्पादनस्य असम्भवात् कार्यं स्वोत्पत्तेः प्राक् कारणे सद् भवति, इति स्वीकर्तव्यम्। इदमत्र बोध्यं यत् सतः कार्यस्य कारणादभिव्यक्तिर्भवति। यथा तिलेषु विद्यमानस्य तैलस्य तिलावघातेन अभिव्यक्तिर्भवति। यथा च दोहनेन सौरभेयीभ्यः पयसोऽभिव्यक्तिर्भवति। एतद्विपरीतं असतः पदार्थस्य करणम् = उत्पत्तिः उत्पादनं वा न कुत्रापि दृश्यते।

**उपादानग्रहणात्—**

उपादानस्य=मृदादेः कारणस्य कार्यार्थिना=घटादिनिर्माणार्थिना=कुलालादिना ग्रहणात् कार्यं स्वोत्पत्तेः प्रागपि सदस्ति, इति स्वीकर्तव्यम्। यथा दध्यर्थी क्षीरमादत्ते, न तु जलम्, यतः जलात् दधि नोत्पद्यते, न च दधि स्वोत्पत्तेः प्राक् जले तिष्ठति। यदि कार्यं स्वोत्पत्तेः प्राक् असत् भवेत्, तर्हि दध्यर्थी जलमादद्यात्। न च सः तथा करोति। अतः, कार्यं सदेव।

असम्बद्धमेव कार्यं कारणैः कुतो न जन्यते? इत्यत्र हेतुरुच्यते—

**सर्वसम्भवाभावात्—**

सर्वस्मादपि कारणात् सर्वस्यापि कार्यस्य सम्भवस्य अभावः वर्तते। तस्मात् कार्यं सत्। अयमभिप्रायः—यदि असम्बद्धस्य कार्यस्य असम्बद्धात्

कारणात् जन्यत्वं स्वीक्रियेत, तर्हि असम्बद्धत्वाविशेषेण सर्वाण्यपि कार्याणि उत्पद्येरन्, न च उत्पद्यन्ते; अतः, असम्बद्धं कार्यमसम्बद्धेन कारणेन न जन्यते, अपि तु सम्बद्धं कार्यं सम्बद्धेन कारणेन जन्यते ।

**शक्तस्य शक्यकरणात्—**

यत् कारणं यस्मिन् कार्ये शक्तं ( समर्थं ) भवति, तस्य शक्तस्य कारणस्य तदेव शक्यं कार्यं भवति । अतः, कार्यं सत् । कारणे तदीयाकारस्थिता कार्यस्य अनभिव्यक्तावस्था ( अव्याकृतावस्था ) एव कार्यस्य नियामिकाशक्तिः । तया शक्त्या सम्बद्धं कार्यं 'शक्य' मित्युच्यते । अतः, कारणे अनागतावस्थारूपेण कार्यस्य सत्ता भवति । अस्य हेतोर्विस्तरः मिश्रपादकृतव्याख्याने द्रष्टव्यः ।

**कारणभावात्**—कार्यमभिव्यक्तेः प्राक् कारणरूपमेव तिष्ठति । अतः, कार्यं सत् । कार्यं कारणाद् भिन्नं न भवति । कार्यकारणयोरुपादेयोपादानभावः । यथा—पटतन्त्वोरुपादेयोपादानभावो वर्तते । पटतन्तू संयोगाभावात् प्राप्त्यभावाच्च ( संयोगानाश्रितत्वात् विभागानाश्रितत्वाच्च ) हेतोः भिन्नौ न स्तः । ययोर्द्वयोर्भेदो भवति, तयोः संयोगो भवितुमर्हति । यथा—घटपटयोः संयोगो भवति । एवमेव ययोर्द्वयोर्भेदोभवति, तयोः परस्परमप्राप्तिर्दृश्यते । यथा—हिमालयविन्ध्याचलयोः भेदो दृश्यते । अयमत्र विशेषः-साङ्ख्यसिद्धान्ते धर्मधर्मिणोरभेदः स्वीक्रियते । अतः, तन्तौ तन्तुरूपे च संयोगविभागयोरभावेऽपि न क्षतिः । अर्थक्रियाभेदोऽपि कार्यकारणयोर्भेदं नापादयति । प्रत्येकं तन्तवः प्रावरणमकुर्वाणा अपि मिलिताः सन्तः आविर्भूतपटाकाराः प्रावरणं कुर्वन्ति ।

एभिरन्यैश्च प्रमाणैर्दृष्टान्तैश्च इदमेव सिद्ध्यति यत् कार्यमभिव्यक्तेः प्रागपि सद्रूपे कारणे सदेव तिष्ठति ।

अतः, साङ्ख्यसम्मतः सत्कार्यवादः सर्वैरपि स्वीकार्यः ।



—****—

# भारतीयदर्शनानां विशेषतः पूर्वमीमांसादर्शनस्य मौलिकाः सिद्धान्ताः

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो
बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः ।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः
सोऽयं नो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥

सर्वेषामपि आस्तिकनास्तिकात्मकवर्गद्वयविभक्तानां भारतीयदर्शन-शास्त्राणां केचन मौलिकाः सिद्धान्ता वर्तन्ते, ये विदुषां कृते अविदिता न सन्ति । तेषां मध्ये जगत्सत्यत्ववादः, जगन्मिथ्यात्ववादः, बुद्धिवादः, क्षणिकवादः, शरीरात्मवादः, परमाणुवादः, प्रकृतिवादः, कर्मवादः, मायावादः, (विवर्तवादः) ब्रह्मात्मैक्यवादः, ब्रह्मसत्यत्ववादः—इत्यादिभिर्नामभिः दार्शनिकभाषायां प्रसिद्धाः सन्ति वादाः । एतेषामेव वादानां सिद्धान्तानां वा गुरुपरम्परया स्वतन्त्ररूपेण वा श्रवणम्, अध्ययनं मननञ्च विधाय तैस्तैर्महानुभावैः श्रीमदाद्य-शङ्कराचार्यभगवत्पादभगवद्बुद्धश्रीमन्महावीरस्वामिश्रीमद्रामकृष्णपरमहंस - श्रीमद्विवेकानन्दमहात्मगान्धिश्रीमदरविन्दोराधाकृष्णन्महामनामदनमोहन - मालवीयप्रभृतिभिः स्वीयया-स्वीयया पद्धत्या भाषया च ग्रन्थरूपेण मौखिकोप-देशरूपेण च तस्मिंस्तस्मिन् समये स्वविचाराः प्रकटिताः सन्ति ।

एतावत्कालपर्यन्तम् आगामिनि च काले विचारे कृते करिष्यमाणे च पूर्वोक्तानां सिद्धान्तानां प्रचारः पूर्णतां यास्यति, इति न केनापि वक्तुं शक्यते । यथा चन्दनकाष्ठं घृष्टं-घृष्टं सत् सुगन्धि अनुभूयते, तथैव वर्तते एतेषां सिद्धान्तानां चर्चा ।

एकस्मिन् एव निबन्धे सर्वेषां सिद्धान्तानां प्रतिपादनं पूर्णरूपेण कथङ्कारं क्रियेत, इति मनसि निधाय अहं पूर्वमीमांसादर्शनशास्त्रमाश्रित्य कांश्चन विचारान् अस्मिन् निबन्धे प्रस्तौमि ।

मया प्रथममेव प्रतिपादिते मङ्गलाचरणपद्ये कथितमास्ते—"कर्मेति मीमांसकाः" इति । तेन इदं फलितं भवति यत् मीमांसकाः धर्मापरपर्यायं कर्म

एव प्रधानं साधनीयं वस्तु इति स्वीकुर्वन्ति। स च धर्मः—**वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्मः**—इति परिभाषितः। स च याग-होम-दान-द्रव्य-गुण-जातिरूपः। एतेषां विधायकानि वाक्यानि वर्तन्ते—**यजेत स्वर्गकामः, अग्निहोत्रं जुहोति, ऋत्विग्भ्यो दक्षिणां ददाति, व्रीहिभिर्यजेत, अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति, यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति**—इत्यादीनि।

'मानाधीना मेयसिद्धिः' इत्ययं सिद्धान्तः सर्वैरपि दार्शनिकैः स्वीक्रियते। अतः, मीमांसका अन्यदार्शनिकसम्मतानि प्रमाणानि स्वीकुर्वन्तोऽपि वेदात्मकं तदनुसारि स्मृतिपुराणादिरूपञ्च शब्दप्रमाणं सर्वोपरि मन्यन्ते। जैमिनिसूत्रभाष्यकर्तारः शबरस्वामिमहाराजाः पुनः पुनः कथयन्ति—**यच्छब्द आह तदस्माकं प्रमाणमिति।**

केचन विपक्षिणः आक्षिपन्ति यत् मीमांसका देवतानामस्तित्वं न स्वीकुर्वन्ति—इति, तदसत्। मन्त्रात्मकादेवाः—इति सर्वेऽपि मीमांसकाः स्वीकुर्वन्ति। किञ्च खण्डदेवादयस्तु—

**विग्रहो हविषां भोग ऐश्वर्यञ्च प्रसन्नता।**
**फलदातृत्वमित्येतत् पञ्चकं विग्रहादिकम्॥**

स्वीकुर्वन्ति।

महर्षिणा जैमिनिना द्वादशाध्याय्यां क्रमेण—( १ ) धर्मलक्षणं तत्प्रमाणम् ( २ ) धर्मभेदः ( ३ ) धर्माणां परस्परमङ्गाङ्गिभावः ( ४ ) धर्माणां प्रयोज्यप्रयोजकभावः ( ५ ) धर्मानुष्ठानक्रमः ( ६ ) धर्मानुष्ठानाधिकारः ( ७ ) धर्माणां प्रकृतिविकृतिस्वरूपं सामान्यातिदेशश्च ( ८ ) विशेषातिदेशः ( ९ ) प्रकृतिषु अतिदिष्टानामङ्गानां विकृतिषु ऊहः ( १० ) कासुचित् विकृतिषु बाधः ( ११ ) तदनुष्ठाने तन्त्रताया विचारः ( १२ ) तेषु प्रसङ्गः समुच्चयश्चेति धर्मस्य सर्वाङ्गीणः विचारः प्रस्तुतः। इदानीं ( १३–१६ ) चत्वारोऽध्यायाः 'सङ्कर्षकाण्डनामकाः प्राप्ताः। येषां व्याख्यानं श्रीमद्भास्कराचार्यैः कृतम्। तदिदानीं प्रकाशितमपि वर्तते।

मीमांसकाः स्वर्गमपि स्वीकुर्वन्ति। परन्तु एतेषां स्वर्गो निरतिशयसुखरूपो वर्तते। तदुक्तम्—

**यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।**
**अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम् ॥**

मीमांसका वेदमपौरुषेयं मन्यन्ते । एतदर्थं ते अनुमानं प्रस्तुवन्ति—

**वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।**
**वेदाध्ययनसामान्यादधुनाध्ययनं यथा ॥**

मीमांसका वैदिके विधिबोधके लिङादिशब्दे शाब्दभावनामंशत्रयोपेतां स्वीकुर्बन्ति । तथैव ते आर्थभावनामपि स्वीकुर्वन्ति ।

यथा वैयाकरणाः कर्तारमाख्यातवाच्यं स्वीकुर्वन्ति, तथामीमांसका न स्वीकुर्वन्ति, अपि तु ते व्यापाररूपां भावनामाख्यातवाच्यां स्वीकुर्वन्ति ।

मीमांसका 'मन्त्रब्राह्मणात्मकस्य वेदस्य एकमपि अक्षरं व्यर्थं न स्वीकुर्वन्ति । तेषां सिद्धान्तोऽस्ति यत् सर्वोऽपि वेदः सार्थकः अध्येतव्यश्च । यतः—**स्वाध्यायोऽध्येतव्यः**' इत्ययं विधिः सर्वस्यापि स्वशाखीयस्य वेदस्य स्वशाखाया वा अध्ययनस्य विधानं करोति । अत एव, विधिमन्त्रनामधेय-निषेधार्थवादरूपेण पञ्चधा वर्गीकृतस्य समग्रस्य वेदस्य अध्ययनमवश्यकर्तव्य-कोटिमाटीकते ।

मीमांसकेषु भाट्टाः षट् प्रमाणानि स्वीकुर्वन्ति । प्राभाकराः पञ्च प्रमाणानि स्वीकुर्वन्ति । ते अनुपलब्धिप्रमाणं न स्वीकुर्वन्ति, अपि तु अनुप-लब्धिप्रमाणं प्रत्यक्षप्रमाणान्तर्भूतं प्रतिपादयन्ति ।

मीमांसकेषु भाट्टाः सर्वस्यापि ज्ञानस्य स्वतःप्रामाण्यं स्वीकुर्वन्ति । तेषां मतमस्ति यत् जायमानं सर्वमेव ज्ञानं प्रथमं यथार्थमेव भवति, अनन्तरं दोषवशात् कस्यचिद् ज्ञानस्य अप्रामाण्यं भवति । प्राभाकरास्तु सर्वमेव ज्ञानं प्रमाणं (प्रमारूपं) स्वीकुर्वन्ति । ते कथयन्ति यत् ज्ञानद्वयस्य भेदाग्रहेण प्रमाता किञ्चित् ज्ञानमप्रमाणं (अप्रमारूपं) मन्यते । अतः, अप्रामाण्यस्य हेतुर्ज्ञानस्य भेदाग्रहः ।

मुरारिमिश्रास्तु 'अनुव्यवसायेनैव ज्ञानस्य प्रमात्वमपि गृह्यते' इति मन्यन्ते ।

मिश्राणां मते भ्रमस्थले अप्रामाण्यं कथमुत्पद्यते ? किं यथा नैयायिका भ्रमस्थले ज्ञानस्य अप्रामाण्यं व्यवसायेन सह उत्पद्यमानं स्वीकुर्वन्ति, तथैव

एते स्वीकुर्वन्ति ? अथवा भाट्टा इव 'दोषवशात् अप्रामाण्यं पश्चाज्जायते इति स्वीकुर्वन्ति ? इति विद्वज्जनैश्चिन्त्यम् ।

एवमिदानीं यावत् प्रस्तुतैः सयुक्तिभिः प्रमाणैर्विचारैश्च पूर्वमीमांसा-दर्शनस्य प्रमुखा मौलिकाः सिद्धान्ताः सुस्पष्टा भवन्ति ।

—:०:—

## भावनास्वरूपम्

पूर्वमीमांसा धर्मनिरूपणप्रधानं दर्शनशास्त्रं वर्तते । धर्मश्च 'वेदेन प्रयोजनमुद्दिश्य विधीयमानः अर्थः, । यथा—यागः, दानमित्यादि । नैयायिकास्तु विहितकर्मजन्यमपूर्वं धर्मं वदन्ति । मीमांसकमतेन यागादिरेव मुख्यो धर्मः, अपूर्वं तु यागादिजन्यत्वेन धर्मत्वं लाक्षणिकम् । स धर्मः—'यजेत स्वर्गकामः' इत्यादिना विधिवाक्येन विधीयते । विधिबोधकाः लिङ्लेडादयः लकाराः तव्य-दादयः प्रत्ययाश्च । तत्र 'यजेत' इत्यस्मिन् पदे अंशद्वयं वर्तते—आख्यातत्वं लिङ्त्वञ्च । आख्यातत्वं दशस्वपि लकारेषु वर्तते, किन्तु लिङ्त्वं लिङ्लकारे वर्तते तत्स्थानीये 'त' प्रत्यये च वर्तते । 'त' प्रत्यये आख्यातत्वमपि वर्तते । आख्यातत्वं लिङ्त्वञ्चेत्युभयमपि भावनामेव अभिदधाति । भवितुर्भवनानुकूलो भावकनिष्ठः व्यापारविशेषः 'भावना' कथ्यते । तात्पर्यमिदं यत् उत्पद्यमानस्य वस्तुनः उत्पत्त्यर्थमपेक्षितः कर्तृनिष्ठो व्यापारः प्रेरणा वा भावना । यथा लोके कस्यचित् प्रेरकस्य पुरुषस्य व्यापारः कमपि कर्माधिकारिणं प्रेरयति, तथैव वैदिकः तिङादिशब्दः पुरुषं प्रेरयति । अतः, पुरुषप्रवृत्त्यनुकूलः भावकनिष्ठः ( वैदिकलिङादिशब्दनिष्ठः ) व्यापारविशेषः शाब्दी भावना । भावनाद्विविधा-शाब्दी आर्थी च । तत्र शब्दनिष्ठा भावना शाब्दी भावना उच्यते । लौकिकानां प्रवर्तनाविशेषाणां पुरुषधर्मत्वेन शब्दनिष्ठत्वायोगात् न तेषां शब्दभावनात्वम् । केचित्तु प्रवर्तनारूपपुरुषाशयविशेषस्यापि लौकिकस्य शब्दाभिधेयत्वात् शाब्द-भावनात्वं प्रतिपादयन्ति । अर्थ्यते प्रार्थ्यते पुरुषैरिति व्युत्पत्त्या 'अर्थः' फल-पर्यायो वर्तते । तत्प्रयोजिका भावना 'आर्थी भावना, कथ्यते । इदानीं भावना-लक्षणघटकानां पदानां विचारः क्रियते—कस्यापि कार्यस्य कर्ता अथवा कस्यापि वस्तुनः उत्पादयिता 'भावकः' 'भावयिता' ( भावयितृ ) वा कथ्यते । क्रियमाणं कार्यम् उत्पद्यमानं वस्तु वा भवितृ कथ्यते । अत एव, भवितुः भवनार्थम् = उत्पत्त्यर्थमपेक्षितः तदनुकूलो व्यापारः भावना कथ्यते ।

**शाब्दभावना—**

इदानीं शाब्दभावनाया अंशत्रयं विचार्यते। इयं भावना साध्यं, साधनम् इति कर्तव्यता चेति अंशत्रयमपेक्षते। किं भावयेत् ? इत्याकाराया अपेक्षायाः पूरकः पदार्थः साध्यमुच्यते। शाब्दभावनायाः **साध्यं** निजांशत्रयोपेता आर्थभावना वर्तते। शाब्दभावना आर्थभावना च एकेनैव 'लिङ्' प्रत्ययेन 'त' इत्यनेन अभिधीयते। अतः, एकप्रत्ययगम्यत्वेन समानाभिधानश्रुतेर्हेतोः आर्थभावना शाब्दभावनायाः साध्यं भवति। समानोच्चारणस्थानप्रयत्नत्वं समानाभिधानत्वम्। यद्यपि सङ्ख्यायाः कालस्य च शाब्दभावनया सह आर्थभावनासदृशमेकप्रत्ययगम्यत्वं वर्तते, तथापि तयोः कृतिसाध्यत्वाभावेन कृतिसाध्यत्वापरपर्यायं शाब्दभावनायाः साध्यत्वं फलत्वं वा नोचितम्।

**साधनाकाङ्क्षायां** करणाकाङ्क्षायां वा लिङादिज्ञानं करणत्वेन रूपेण शाब्दभावनायामन्वेति। तच्च लिङादिज्ञानम् आर्थभावनाया उत्पादकत्वेन रूपेण करणं न भवति; यतः, तस्य तथात्वे स्वीकृते सति लिङादिज्ञानात् प्राक् शाब्दभावनायां अभावः अनिष्टः सन्नपि स्वीकार्यो भविष्यति। अयमेव विषयः विपरीतोदाहरणेन स्पष्टीक्रियते—यथा रूपादिप्रत्यक्षज्ञानार्थमपेक्षितात् इन्द्रियार्थसन्निकर्षात् प्राक् रूपज्ञानस्य अभावः भवति, स च अभावः विदुषामिष्टः भवति, तादृशः लिङादिज्ञानात् प्राक् शाब्दभावनाया अभावः विदुषामिष्टः न भवति। फलितार्थः अयम्—यथा कुठारः पुरुषसाध्यछेदनव्यापारं सम्पादयन् पुरुषस्य करणमित्युच्यते, तथा लिङादिज्ञानमपि शब्दभावनाभाव्यार्थभावनां सम्पादयत् शब्दभावनाकरणमित्युच्यते।

शाब्दभावाया इति कर्तव्यताकाङ्क्षायाम् अर्थवादवाक्यैर्बोधितं विधेयकर्मणः प्राशस्त्यस्यज्ञानम् इति कर्तव्यतारूपेण अन्वितं भवति। कर्तव्यस्य प्रकारः इतिकर्तव्यता उच्यते।

अर्थवादः द्विविधः—प्रथमः—विधेयस्य कर्मणः प्राशस्त्यस्य बोधकः। द्वितीयः—निषेध्यस्य कर्मणः निन्दाया (बलवदनर्थजनकत्वस्य) बोधकः। शाब्दभावनायामितिकर्तव्यतारूपेण अपेक्षितं **'वायव्यं श्वेतमालभेत भूतिकामः'** इत्यादि स्थले कर्मप्राशस्त्यज्ञानं **'वायुर्वै क्षेपिष्ठा देवता'** इत्याद्यर्थवादैर्बोध्यते। एते अर्थवादाः स्वघटकपदशक्त्या बोध्यमानस्य अर्थस्य प्रतिपादनेन सिद्धप्रयोजना न भवन्ति, अपि तु लक्षणया विधेयस्य यागादेः प्राशस्त्यं प्रतिपादयन्ति। यदि अर्थवादानां प्रयोजनं स्ववाच्यार्थप्रतिपादनमात्रमङ्गीक्रियेत, तर्हि तेषामानर्थक्यामापतेत; यतः, मीमांसका मन्यन्ते—**आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्** (जैमिनीय सू.)

**'स्वाध्यायोऽध्येतव्यः'** ( शत० ब्रा० ११, ५, ७, २ ) इत्यध्ययनविधिः विधिमन्त्रनामधेयनिषेधार्थवादेतिपञ्चधा विभक्तस्य सर्वस्यैव वेदस्य अध्ययन-कर्तव्यतां 'बोधयन् सर्वो वेदः प्रयोजनवदर्थपर्यवसायी' इति सूचयति । यतः, निरर्थकस्य अध्ययनम् अनुपपन्नं स्यात् ।

शाब्दभावनायाः स्वरूपस्य विषये इदानीं विचार्यते—

अभिधीयते या सा अभिधा अर्थात् समीहितसाधनता । इयं समीहित-साधनता एव प्रवर्तनात्वेन रूपेण अभिहिता सती ( विधिवाक्यश्रोतुः ) पुरुषस्य प्रवृत्तिं भावयति, इति हेतोः 'भावना' कथ्यते । इमां भावनां लिङादयः प्रवर्तकाः प्रत्यया बोधयन्ति ।

न्यायसुधाकाराः सोमेश्वरभट्टमहोदयाः कथयन्ति—पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः शाब्दी भावना । अयं व्यापारविशेष एव विधिप्रत्ययस्य वाच्यार्थः, यतः लिङादिश्रवणे सति अयं विधिशब्दः मां श्रोतारं प्रवर्तयति-एतादृशी प्रतीतिः नियमेन भवति ।

केचिदर्वाचीना वैयाकरणाः कथयन्ति–इष्टसाधनत्वं विध्यर्थः ( लिङर्थः ) इति ।

एतदर्वाचीनवैयाकरणमतं मीमांसान्यायप्रकाशकारः आपदेवः न स्वी-करोति । सः कथयति—यदि इष्टसाधनता लिङर्थः स्वीक्रियेत, तर्हि विधि-बोधको लिङादिः 'इष्टसाधनम्' इति शब्दस्य पर्यायः स्यात् । लिङादिशब्दस्य इष्टसाधनशब्दस्य च पर्यायत्वम् इष्टापत्तिरूपेण स्वीकर्तुं न युज्यते, यतः, सन्ध्योपासनं ते इष्टसाधनम्, अतः, त्वं सन्ध्यावन्दनं कुरु–एतादृशः उभयोः सहप्रयोगः शिष्टैः क्रियते । शिष्टैः पर्यायाणां सहप्रयोगः न क्रियते । अतः, व्यापारविशेष एव विध्यर्थः स्वीकार्यः । सोऽयं व्यापारविशेषः लोके पुरुष-निष्ठोऽभिप्रायविशेषः । वेदे तु कर्तृपुरुषस्य अभावात् प्रेरणापरपर्यायः सः व्यापारविशेषः शब्दनिष्ठ एव भवति ।

अत्र इदं शङ्क्यते—शक्तिग्रहस्य व्यवहारसाध्यत्वेन लौकिकलिङादेः पुरुषनिष्ठव्यापारवाचकत्वेन रूपेण लोके प्रयोगो दृश्यते । वेदे वैदिकलिङादि-प्रयोक्तृपुरुषस्य अभावात् वैदिकलिङादितः प्रेरणापरपर्यायस्य शब्दनिष्ठव्या-पारस्य प्रतीतिः कथं भवति ?

अस्याः शङ्काया इदमुत्तरम्—

यद्यपि लोके पुरुषनिष्ठव्यापारे एव लिङादीनां प्रयोगः भवति, तथापि लोके वेदे च लिङादिशब्दश्रवणानन्तरमेव प्रवृत्तेर्जायमानत्वात् अन्वयव्यति-

रेकाभ्यां लिङादिविधिशब्दः एव प्रवर्तनाया वाचकः। अतः, प्रवर्तनासामान्यमेव विधिशब्दस्य वाच्यार्थः। प्रवर्तनाविशेषस्य प्रतीतिर्लक्षणावृत्त्या भवति। प्रैषादिरूपस्य वक्त्रभिप्रायस्य अपौरुषेये वेदे अनुपपत्तेः शब्दनिष्ठः एव प्रेरणापरपर्यायः व्यापारः स्वीक्रियते। स च व्यापारः शब्दनिष्ठः।

अत्र न्यायसुधाकाराः कथयन्ति—'अभिधीयते अनेन' इति व्युत्पत्त्या अभिधाशब्देन विधिशब्दः उच्यते। 'अनेन' इति पदेन कर्तृव्युत्पत्तिः करणव्युत्पत्तिश्चेत्युभयमपि स्वीक्रियते। एवं विध्यादिशब्दनिष्ठां शब्दव्यापाररूपां भावनां लिङादयः बोधयन्ति। अस्मिन् मते अभिधाया भावना अभिधाभावना–इति षष्ठीतत्पुरुषसमासः विवक्षितः।

शब्दभावनाविषये पार्थसारथिमिश्रादयः कथयन्ति—प्रवर्तनासामान्यं विध्यर्थः। प्रवृत्त्यनुकूलो व्यापारः प्रवर्तना। अपौरुषेये वेदे प्रैषादेरसम्भवात् कश्चित् पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः कल्पनीयः। विधिशब्दाभिधेयप्रवर्तनासामान्यस्य विशेषमन्तरेण अपर्यवसानात्। अतः, धात्वर्थगतं समीहितसाधनत्वमेव सः व्यापारविशेषः। सर्वेऽपि जनाः समीहितसाधनतां ज्ञात्वा कर्मणि प्रवर्तन्ते। अन्यप्रेरितोऽपि कोऽपि जनः यदि इष्टसाधनतां न जानाति, तर्हि न प्रवर्तते।

सारांशोऽयं यत् समीहितसाधनता एव प्रवर्तनात्वेन रूपेण विध्यर्थः।

यदि समीहितसाधनता ( इष्टसाधनता ) विध्यर्थत्वेन स्वीक्रियते, तर्हि सन्ध्योपासनं ते इष्टसाधनं तत् त्वं कुरु इति सहप्रयोगः अनुपपन्नः स्यात्, इति न वक्तुं शक्यते; यतः, समीहितसाधनता विशेषरूपेण विधिना नाभिधीयते, अपि तु प्रवर्तनात्वेन रूपेण अभिधीयते। सामान्यवाचकशब्दस्य विशेषवाचकशब्देन सह प्रयोगः उपलभ्यते। यथा पाञ्चालराजो द्रुपदः इति।

इयं प्रवर्तनारूपा समीहितसाधनता शब्देनैव अभिधीयते। अतः, शाब्दी भावना उच्यते।

**"अभिधाभावनामाहुरन्यामेव लिङादयः"**

( तं० वा० २।१।१।३४४ )

इत्यस्य वार्तिकस्यापि अयमेव अभिप्रायः—या अभिधीयते सा अभिधा – समीहितसाधनता, सैव प्रवर्तनात्वेन रूपेण अभिहिता पुरुषप्रवृत्तिं भावयति। अतः, भावना उच्यते। एतामेव भावनां लिङादयः अभिदधति। प्रथमे आचार्यमण्डनमिश्रा अपि आहुः—

पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः।
प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्तनाम् ॥

( विधिविवेकः पृ० २४२ )

एवमेतावत्पर्यन्तं कृतेन विचारेण शाब्दभावनायाः सर्वाङ्गं स्वरूपं सुस्पष्टं भवति।

## आर्थी भावना

अर्थ शब्दस्य अर्थः फलमित्यपि भवति। अर्थसम्बन्धिनी भावना आर्थी भावना उच्यते। अत एव स्वर्गादिरूपं फलमुद्दिश्य प्रवृत्तस्य पुरुषस्य यागार्थं जायमाना प्रवृत्तिर्व्यापारो वा आर्थी भावना वर्तते। अत्र मतद्वयं वर्तते—केचन आर्थीं भावनां कर्तृव्यापाररूपां मन्यन्ते। अन्ये स्वर्गादिरूपफलेच्छाजनितं यागविषयकं प्रयत्नम् आर्थीं भावनां मन्यन्ते।

अत्र न्यायसुधाकाराः भट्टसोमेश्वराः कथयन्ति—प्रयोजनेच्छाजनितयागविषयकः प्रयत्नः आर्थभावना। सः प्रयत्नः आख्यातांशेन उच्यते; यतः, 'यजेत' इत्याख्यातश्रवणे सति नियमेन 'यागे यतेत' इत्याकारा प्रतीतिर्भवति। यः कश्चन पुरुषः प्रयत्नपूर्वकं गमनं करोति, तस्मिन् 'अयं पुरुषो गमनं करोति, 'एतादृशः प्रयोगो भवति। वातादिना स्पन्दने सति 'अयं स्पन्दं करोति, इति प्रयोगो न भवति। एवमेव 'यजेत' इत्यादेः करोत्यादिना सामानाधिकरण्यं दृश्यते। यथा 'यजेत' = यागेन कुर्यात्, पचति = पाकं करोति, इत्यादि। एतेन दृष्टान्तेन इदं सिद्ध्यति यत् प्रयत्नः आख्यातवाच्यो भवति। एवमेव 'रथो गच्छति' इत्यादि प्रयोगोऽपि साधुरेव; यतः, एतादृशे प्रयोगे वोढृस्वगतः प्रयत्नो जडे ( अचेतने ) रथे आरोप्यते। अतः, प्रयत्नः एव आर्थी भावना, इति सिद्ध्यति।

पार्थसारथिमिश्राः कथयन्ति—यस्मिन् व्यापारे कृते करणं फलोत्पादनाय समर्थं भवति सः व्यापारः आर्थी भावना। स एव आख्यातार्थः भवति।

लोके 'कुठारेण छिन्द्यात्' इत्यस्य वाक्यस्य फलितार्थो भवति—कुठारेण तथा व्याप्रियेत, यस्मिन् व्यापारे कृते कुठारेण छेदनक्रिया निष्पद्यते। एवं वेदे 'यजेत स्वर्गकामः' इत्यस्य वाक्यस्य फलितार्थो भवति—यागेन तथा व्याप्रियेत, यस्मिन् व्यापारे कृते यागेन अपूर्वद्वारा स्वर्गो भवेत्। लोके उक्तस्थले स व्यापारः उद्यमननिपातनादिरूपो भवति। वेदे उक्तस्थले अग्न्याधानादिब्राह्मणतृप्त्यन्तादिरूपो भवति। 'रथो ग्रामं गच्छति' इत्यादि स्थलेऽपि आख्यातेन

ग्रामप्राप्त्यनुकूलो व्यापार एव प्रतीयते। एवमेव 'देवदत्तः प्रयतते' इत्यत्रापि फलितार्थोऽयमेव यत् देवदत्तस्तथा व्याप्रियते यथा प्रयत्नो भवति। अतः, प्रयत्नानुकूलो व्यापार एव आख्यातार्थः, न तु प्रयत्नः, इति सिद्ध्यति। सर्वत्र अनुगतत्वात् अन्योत्पादानुकूलव्यापारसामान्यमेव आख्यातार्थः, स एव च आर्थी भावना इत्यपि सिद्ध्यति।

भावनाविषये मीमांसान्यायप्रकाशकारा आपदेवमहोदयाः प्रायः पार्थसारथिमिश्राणामेव मतं स्वीकुर्वन्ति। अन्ये खण्डदेवादय आचार्या अपि—वैदिकलिङादिनिष्ठः पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः शाब्दीभावना, स्वर्गादिप्रयोजनेच्छाजनितः यागादिविषयकः प्रयोज्यस्य देवदत्तादेर्व्यापारः आर्थी भावना—इति मन्यन्ते।

एवमेतावत्पर्यन्तं कृतेन निरूपणेन शाब्दार्थभेदवत्या भावनायाः स्वरूपं सुस्पष्टं भवति।

—:-०-:—

## 'ब्रह्म सत्यं जगन्मिथ्या'—इति प्रतिपादनम्

"ब्रह्म सत्यं जगन्मिथ्या" इति वेदान्तेषु सम्यगुपलभ्यते। भगवद्भिः आद्यशङ्कराचार्यैः उक्तमस्ति—

**"श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः।**
**ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः॥"**

अनेन कथनेन इदं फलितं भवति यत् 'अयमात्मा ब्रह्म' इति श्रुत्यनुसारं ब्रह्मैव = आत्मैव सत्यं वस्तु; तदतिरिक्तं भासमानं समग्रं जगत् मायारूपं मायया कल्पितं मिथ्या = न परमार्थसत् इति।

इदानीं प्रश्नोऽयमुपस्थितो भवति—प्रत्यक्षप्रमाणप्रतिपन्नस्य जगतः मिथ्यात्वं कथं स्वीकार्यम्? यतः समग्रोऽपि जागतिको व्यवहारः सुखदुःखफलप्रदः मूर्खैर्विद्वद्भिश्च तुल्य एव स्वीक्रियते। किञ्च जगतः स्वर्गादीनाञ्च सत्तायाः स्वीकरणेनैव ऐहलौकिकः पारलौकिकः सुखोपायो धनार्जनयज्ञानुष्ठानादिरूपः अनादिकालात् प्रवृत्तो दृश्यते। जगत्सत्यत्वस्वीकर्तृषु प्रमुखैश्चार्वाकैः,

नैयायिकैः, मीमांसकैश्च जगतः सत्यत्वं विविधाभिर्युक्तिभिः प्रत्यक्षप्रमाणेन, अनुमानप्रमाणेन आगमप्रमाणेन च साधितमस्ति—

अत्रोच्यते सिद्धान्तिना—

भगवद्भिः शङ्कराचार्यैः त्रिविधा सत्ता स्वीकृता

१) व्यावहारिकी २) प्रातिभासिकी ३) पारमार्थिकी

एतासां सत्तानां मध्ये पारमार्थिकी सत्ता ब्रह्मण एव वर्तते, नान्यस्य कस्यापि वस्तुनः—इति अस्ति सिद्धान्तसारः।

इदानीमस्यैव विस्तरः क्रियते—

**"इन्द्रो मायाभिः पुरुरूप ईयते**
**रूपं रूपं प्रतिरूपो बभूव"**—ऋ० सं० ६।४४।१८

**"तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी"**—तैत्तिरीयोपनिषद् २।१

—इत्यादिश्रुतिवचनैः **"स एवेदं ससर्जाग्रे भगवानात्ममायया—** ( श्रीमद्भागवतम् १।२।२० ) इत्यादि पुराणवचनैश्च सुस्पष्टमस्ति यत् वस्तूनां व्यावहारिकी सत्ता अस्त्येव। अथ च "ब्राह्मणोऽयम्", "क्षत्रियोऽयम्" "पण्डितोऽयम्", "मूर्खोऽयम्" इत्यादि व्यवहारोऽपि व्यावहारिकीं सत्तां प्रमाणयति। व्यवहारो नाम शब्दप्रयोगः सहाहारादिरूपा आदानप्रदानादिरूपा जगच्चर्या च।

भगवद्भिः शङ्कराचार्यैरपि उक्तम्—

**"सत्यानृते मिथुनीकृत्य अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः।'**—ब्र० सू० शाङ्करभाष्य अध्याय १ ( उपोद्घातः )।

इदमत्र अवश्यमेव अवधेयम्—सिद्धान्ती सर्वस्यापि जागतिकवस्तुनः व्यवहारस्यापि अधिष्ठानं ब्रह्म एव वर्तते, इति स्वीकरोति। अतः, ब्रह्मण एव एका अबाधिता सत्ता अस्ति, किन्तु विना व्यावहारिकीं सत्तां दैनन्दिनो व्यवहारः गुरुशिष्यपरम्परा वा न सम्भवति। अतः, व्यावहारिकी सत्ता अपि वेदान्तिभिः स्वीक्रियते।

इदानीं प्रातिभासिकसत्तायाः विचारः क्रियते। प्रतिभासते इति प्रतिभासः = भ्रमज्ञानम् अथवा भ्रमविषयं वस्तु। तत्सम्बन्धिनी या सत्ता सा प्रातिभासिकी। यथा शुक्तौ रजतस्य, रज्जौ सर्पस्य वा सत्ता प्रातिभासिकी एव।

एताभ्यां सत्ताभ्यां भिन्ना सत्ता पारमार्थिकी। यस्य वस्तुनः त्रिकालाबाधः = कालत्रयेऽप्यबाधः भवति, तद् वस्तु परमार्थसत्। तस्य सत्ता पारमार्थिकी।

समग्रं जगत् तत्रत्यमनुभूयमानं ब्रह्मातिरिक्तं वस्तु अपि न पारमार्थिकम्, अपि तु केवलं ब्रह्मैव अत्यन्ताबाधितत्वात् पारमार्थिकम्। अतः, एकमात्रं ब्रह्म एव सत्यमस्ति।

सत्यस्य शास्त्रीया परिभाषा इयमस्ति—"त्रिकालाबाध्यं सत्यम्।" ब्रह्म एव एकमात्रं तत्त्वम् अस्ति यत् कालत्रयेऽपि अबाधितं भवति। अतः, ब्रह्म एव सत्यम्।

'ब्रह्म सत्यम् अस्ति'—अस्मिन् विषये श्रुतिषु अपि बहु उपलभ्यते। यथा—

**"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्।"**

—छान्दोग्योपनिषद् (६।२।१)

**"सत्यं ज्ञानमनन्तं ब्रह्म।"**—तै० आ० (२।१।१)

एवं सिद्धमिदं यत् ब्रह्म एव त्रिकालाबाधितत्वात् सत्यम्।

जगन्मिथ्या—पारमार्थिके ब्रह्मणि आकाशादि व्यावहारिकं जगत् कल्पितम्। अत एव, मिथ्या। व्यावहारिके शुक्त्यादौ कल्पितं प्रातीतिकं रजतादि व्यवहारापेक्षयापि मिथ्या। अधिष्ठानातिरिक्तस्य अध्यस्तस्य सत्ता केवलं कल्पितैव।

अद्वैतवेदान्ते विवर्तवादः स्वीकृतः अस्ति। अतः, अद्वैतवेदान्तानुसारं समग्रं जगत् ब्रह्मण एव विवर्तः अस्ति। अतः, जगन्मिथ्या।

जगति वेदान्ताभिमतं सत्यस्य लक्षणमपि न घटते। भगवद्भिः शङ्कराचार्यैः सत्यस्य लक्षणम् एवं कृतमस्ति—

**"यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति तत्सत्यम्।"**

'गम्' धातोः 'क्विप्' प्रत्यये 'द्युतिगमिजुहोतीनां द्वे च' ( वार्तिकम् ३।२।१७८ सूत्रस्थम् ) इत्यनेन द्वित्वे च कृते 'जगत्' शब्दः निष्पद्यते। अस्य व्युत्पत्तिलभ्यः अर्थः अयमस्ति—

"यत् निरन्तरं गच्छति अर्थात् उत्पत्तिस्थितिलयान् प्राप्नोति तत् जगत्।"

अतः, स्पष्टमेव यत् जगति सत्यस्य उपर्युक्तं लक्षणं न घटते। अतः, जगन्मिथ्या।

एतदतिरिक्तं यदि सत्यस्य "त्रिकालाबाध्यं सत्यम्" इदं लक्षणं क्रियते, तर्हि इदमपि लक्षणं जगति घटितुं न शक्यते, यतः, ब्रह्मज्ञानानन्तरं जगत् बाध्यते एव।

जगतः मिथ्यात्वं अद्वैतसिद्ध्यादिग्रन्थेषु बहुधा प्रपञ्चितम्। यथोक्तम्-

( क ) किमिदं मिथ्यात्वं साध्यते? न तावत् 'मिथ्याशब्दोऽनिर्वचनीयतावचन" इति पञ्चपादिकावचनात् सदसदनधिकरणत्वरूपमनिर्वाच्यत्वम्।

( ख ) प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं वा मिथ्यात्वम्।

( ग ) ज्ञाननिवर्त्यत्वं वा मिथ्यात्वम्।

( घ ) स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं वा मिथ्यात्वम्।

( ङ ) सद्विविक्तत्त्वं वा मिथ्यात्वम्।

एतेषु लक्षणेषु अयं क्रमः—

**"आद्यं स्यात् पञ्चपाद्युक्तं ततो विवरणोदिते।**
**चित्सुखीयं चतुर्थं स्यादन्त्यमानन्दबोधजम्॥"**

( क ) प्रथमलक्षणानुसारेण जगत एव मिथ्यात्वं सिद्ध्यति। यतः पूर्वचर्चितासु त्रिविधासु सत्तासु मध्ये परमार्थिकी सत्ता ब्रह्मण एव प्रतिपादिता। तदेवैकं सत्यम्. प्रपञ्चस्तु आविद्यिकसत्त्वान्मिथ्या। अतः, पञ्चपादिकाकारैः, सतो ब्रह्मणः असतश्च खपुष्पादेः भिन्नं जगत् मिथ्येति वक्तुं युक्तम्; इति कथितम्।

(ख) पञ्चपादिकाविवरणग्रन्थे प्रकाशात्मयतिभिः परिष्कृतं मिथ्यात्वलक्षणं 'प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम् मिथ्यात्वमिति प्रतिपादितम्। तत्र उपाधिशब्देन अयम् आशयः परिगृह्यते-जगतः आश्रयत्वेन प्रतिपादितं ब्रह्म।

तत्र ब्रह्मणि समस्तं जगत् कल्पितम्। जगत् कालत्रयेऽपि परमार्थतः नासीत्, न वा अस्ति, न वा भविष्यति-इत्येवं त्रैकालिकनिषेधप्रतियोगित्वात् जगन्मिथ्या।

(ग) ब्रह्मसाक्षात्कारानन्तरं 'नेह नानास्ति किञ्चन, इत्यादिरूपेण त्रैकालिकनिषेधो भवति प्रपञ्चस्य। यथोक्तं मुण्डकोपनिषदि—

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥**

—मुण्डकोपनिषद् (२।२।८)

तुरीयावस्थायां समाधौ ब्रह्मसाक्षात्कारः सम्भवति। तस्य वैशिष्ट्यं प्रतिपादयन् श्रीहर्षाचार्यः कथयति—

**"यः साक्षात्कुरुते समाधिषु परब्रह्म प्रमोदार्णवम्।"**

ब्रह्मसाक्षात्कार एव तादृशं ज्ञानं, येन जगत् निवर्त्तते। तस्मात् जगन्मिथ्या।

(घ) चित्सुखाचार्यैः स्वग्रन्थे चतुर्थं लक्षणं प्रतिपादितम्—"सत्त्वेन परामृष्टं जगत्; तस्याश्रयः ब्रह्म, तन्निष्ठो योऽत्यन्ताभावः-जगन्नास्ति, नासीत्, न भविष्यति इत्याकारकः, तस्य अत्यन्ताभावस्य प्रतियोगित्वात् जगन्मिथ्या।

(ङ) आनन्दबोधाचार्यैः पञ्चमं लक्षणं कृतम्—"सद्रूपाद् ब्रह्मणः भिन्नत्वात् जगन्मिथ्या।"

एवं सिद्धमिदं यत् पारमार्थिकी सत्ता ब्रह्मण एव। ब्रह्म एव सत्यम् अस्ति, तदतिरिक्तं सर्वं जगत् विवर्तरूपं=मिथ्या एव अस्ति। अतः, आद्यशङ्कराचार्याणां "ब्रह्म सत्यं जगन्मिथ्या" इति सारगर्भितं वचनं सर्वथा युक्तियुक्तं वर्तते, यस्मिन् अद्वैतवेदान्तस्य सिद्धान्ताः सर्वथा समाविष्टाः दृश्यन्ते।

—:०:—

# 'सत्यमेव जयति इति, श्रुतेर्विचारः

॥ श्री ॥

ईश्वरो गुरुरात्मेतिमूर्तिभेदविभागिने ।
व्योमवद्व्याप्तदेहाय दक्षिणामूर्तये नमः ॥

'सत्यमेव जयति' इति श्रुतिवाक्यस्य कोऽभिप्रायः भगवत्या श्रुत्या दित्सित इति विचार्यते—

इदं श्रुतिवाक्यं मुण्डकोपनिषदः तृतीयमुण्डके प्रथमे खण्डे समागतमस्ति।

तत्र 'जयति' इति पाठः उपलभ्यते। मुद्रितपुस्तकेषु 'जयते' इतिपाठो वर्तते। भारतशासनमुद्रायामपि 'जयते' इति प्रयोगो दृश्यते, तथापि 'जयति' इत्येव साधुः प्रयोग इति वेदितव्यम्।

अत्र 'सत्यपदस्य' 'सत्यवति' पुरुषे लक्षणा विधेया। तेन फलितं भवति यत् सत्यवानेव जयति नानृतवादी इति। यतः, केवलयोः सत्यानृतयोः पुरुषानाश्रितयोः जयः पराजयो वा न सम्भवति।

अनेन इदमायाति यत् सत्यं लोके परमार्थमार्गे च श्रेष्ठं साधनमस्ति।

अस्मिन् वाक्ये प्रयुक्तः एवकारः अनृतपक्षस्य खण्डकः।

एवकारस्य त्रयः अर्थाः तात्पर्यविषयीभूताः प्रसिद्धाः सन्ति—अयोगव्यवच्छेदः, अन्ययोगव्यवच्छेदः अत्यन्तायोगव्यवच्छेदश्चेति।

केचन अनृतसमर्थकाः कथयेयुः–अनृती अपि कलौ जयति लोके, तथा अनृतस्यापि सिद्धिहेतुत्वं भवतुमर्हति।

एतां शङ्कां निराकर्तुं श्रुतिः एवकारं प्रयुङ्क्ते। स्वप्नेऽपि अनृतस्य अनृतिनो वा जयः न सम्भाव्यते, इत्याशयः उक्तश्रुतेः।

एतेन इदं निष्पन्नं भवति यत् अत्र एवकारः अन्ययोगव्यवच्छेदी।

इदमपि अन्यत् तात्पर्यं प्रकरणपर्यालोचनेन स्पष्टं भवति यत् ब्रह्मचर्यादीनि विविधानि साधनानि सन्ति आत्मसाक्षात्कारे उपयोगीनि, किन्तु तेषां मध्ये सत्यस्य प्राधान्यं वर्तते।

तत्र भगवत्पूज्यपादाः स्वयं भाष्ये कथयन्ति—

'सत्यादिसाधनस्तुत्यर्थोऽयमर्थवादः' इति।

अनेन इदं फलति यत् एवकारः अत्र सत्यस्य त्रिकालाबाधितं साधनत्वं प्रमाणयति।

भाष्यकाराः अपि अग्रे कथयन्ति "अतः सिद्धं सत्यस्य बलवत्साधनत्वम्"।

इत्थं विचारे कृते इदमेव सिद्ध्यति यत् भगवती श्रुतिः अनेन वाक्येन आदिशति यत् मुमुक्षुणा सत्यं समाश्रयणीयं पारमार्थिकसाधनेषु प्रधानरूपेण, तथा सत्यमेव सर्वत्र जयति, स्वप्नेऽपि नानृतं जयति' इति।

**सत्यमित्यादिवाक्यस्य विचारोऽयं मया कृतः।**
**समर्प्यते गुरुपदद्वन्द्वे तत्प्रेरणोद्भवः॥**

—:-०-:—

# जन्माद्यधिकरणविचारः

श्रीमन्तो भगवत्पादशङ्कराचार्याः सकलश्रुतिस्मृतीतिहासनिगमागमपारदृश्वानोऽपि अद्वैतसिद्धान्तप्रतिपादने आग्रहिणो दृश्यन्ते।

अत्र हेतुः सुस्पष्ट एव विद्यावदातधिषणानां कृते। तथापि सर्वसाधारणजनतोषार्थं स्पष्टीक्रियते—

अयं संसारो दुःखरूपोऽस्तीति सर्वैरपि शास्त्रविद्भिः कथ्यतेऽनुभूयते च। अस्य दुःखस्य हेतुः द्वैतवृत्तिः। सा च अज्ञानमूला। अज्ञानमपि द्विविधम्—मूलाज्ञानं तूलाज्ञानञ्च।

आत्मविषयकमज्ञानं मूलाज्ञानं कथ्यते। तत्र घटपटादिविषयकमज्ञानं तूलाज्ञानं कथ्यते॥

जन्ममरणादिप्रपञ्चस्य कारणं मूलाज्ञानमेव। मुमुक्षुणा अस्य मूलाज्ञानस्य निवृत्तये परमार्थज्ञस्य गुरोः सकाशादद्वैतब्रह्मविषयकं ज्ञानं प्राप्तव्यम्।

तद् ब्रह्म किमाकारमिति जिज्ञासायां जातायाम्, तां जिज्ञासां शमयन् ब्रह्मसूत्रकारः वेदव्यासः परमाचार्यः कथयति—

'जन्माद्यस्य यतः' इति।

(ब्र. सू. अ. १ पा. १ सू. २)

अस्यायमर्थः—अस्य विकारिजगतः यस्मात् जन्मादि तद् ब्रह्म इति। अत्र सूत्रे जन्मादि इति नपुंसकवचनः समाहारोबहुव्रीहिः। जन्म आदिः येषां स्थित्यादीनां तेषां समाहारः = जन्मादि। अत्र जन्मनः समासार्थैकदेशस्य गुणत्वेन संविज्ञानं यस्मिन् बहुव्रीहौ स तद्गुणसंविज्ञानो बहुव्रीहिरिति।

**अत्र भगवत्पादाः स्वविरचिते भाष्ये कथयन्ति—**

अस्य जगतो नामरूपाभ्यां व्याकृतस्य अनेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य जन्मादि अर्थात् जन्मस्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेः कारणाद् भवति तद् ब्रह्म इति।

इदं ब्रह्मणः तटस्थलक्षणमस्ति। स्वरूपलक्षणन्तु **'सत्यं ज्ञानमनन्तं ब्रह्म'** इत्यादि।

इह इदं भगवत्पादानां वैशिष्ट्यं वर्तते यत् ते श्रुत्यै प्राथम्यं यच्छन्ति। सत्स्वपि अन्याचार्यवचनेषु ते श्रुत्युक्तमेव प्रमाणत्वेन स्वीकुर्वन्ति, तदनुसारमेव च स्वभाष्यं रचयन्ति।

उदाहरणार्थमत्रैव पश्यन्तु विद्वांसो यत् यास्काचार्येण 'जायते०' इत्यादि वाक्येन निरुक्ते ये विकाराः पठितास्ते भगवत्पादैः पृथक् न स्वीकृताः, अपि तु तेषामन्तर्भावः श्रुत्युक्तेषु त्रिषु विकारेषु स्वीकृतः।

अत्रायं प्रश्नः समुदेति यत् 'जन्माद्यस्य यतः' इत्यस्य व्याससूत्रस्य मूलं किं श्रुतिः यास्कसूत्रं वा ?

अत्र पूर्वपक्षी कथयति—'जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यति' इति यास्कसूत्रमेव 'जन्माद्यस्य यतः' इत्यस्य सूत्रस्य मूलमिति।

सिद्धान्ती कथयति—'न' इति। यतः, यास्कसूत्रं पौरुषेयं वर्तते, तदपेक्षया अपौरुषेया श्रुतिः प्रबला वर्तते। अस्माभिः सिद्धान्तिभिः सर्वत्र श्रुतिरेव प्रमाणानामपि प्रमाणरूपेण स्वीक्रियते। अत्र सा श्रुतिः—

**'यतो वा इमानि भूतानि जायन्ते०'** इत्यादितैत्तिरीयश्रुतिः।

इदमत्रावधेयम्—यत्र प्रत्यक्षश्रुतिरुपलभ्यते तत्र सा श्रुतिः प्रमाणत्वेन स्वीक्रियते, किन्तु यत्र सा नोपलभ्यते तत्र श्रुत्यविरोधि स्मृत्यादिकं प्रमाणत्वेन स्वीक्रियते, श्रुतिश्च कल्प्यते इति।

एवं सिद्धं भवति यत् भगवत्पादाः श्रुतिविषये आग्रहिणः । अत एव, तेऽन्यत्र कथयन्ति—

**वेदो नित्यमधीयतां तदुदितो मार्गः समाश्रीयतामित्यादि ।**

नूनं धन्यतमाः सन्ति भगवत्पादाः । तेषां विषये तैर्विरचितस्य भाष्यस्य विषये च इदं वक्तुं युक्तमेव—

**शास्त्रेषु शाङ्करं रम्यं**
**तत्र रम्या चतुष्टयी ।**
**तत्रापि सौत्रकं रम्यं**
**तत्र सौत्रचतुष्टयी ॥**

—:०:—

# अद्वैतवेदान्तदर्शने साक्षिणः स्वरूपम्

**ईश्वरो गुरुरात्मेति मूर्तिभेदविभागिने ।**
**व्योमवद्व्याप्तदेहाय दक्षिणामूर्तये नमः ॥**

यथा व्यवहारे कस्यापि कर्मणः द्रष्टा "साक्षी" इत्युच्यते, स च उदासीनः सन्नपि द्रष्टा भवति, तथैव वेदान्तदर्शनेऽपि "साक्षी" इत्युच्यते । यथा च लोके कस्मिश्चिदभियोगे यथार्थनिर्णयार्थं तस्य साक्षिणः उपयोगः भवति, तथैव अध्यात्मक्षेत्रे नैतिकताप्रसङ्गे च साक्षिणः उपयोगः ।

यद्यपि अन्यानि न्यायवैशेषिकादिदर्शनानि साक्षिणं पृथक्पदार्थरूपेण न स्वीकुर्वन्ति, तथापि वेदान्तदर्शनं साक्षिणं स्वीकरोति ।

वेदान्तदर्शनं कथमति—

निद्रासमयेऽनुभूतस्य ( आनन्दस्य ) अनुसन्धानेन कश्चित् जीवसाक्ष्यपरपर्यायः साक्षी स्वीकार्यः, यतः, तस्मिन् समये जीव एव साक्षिरूपेण आनन्दमनुभवति । अन्तकरणावच्छिन्नं चैतन्यं जीवः । जीवसाक्षिणो लक्षणमस्ति—

"( तत्साक्षि ) अन्तःकरणोपहितं चैतन्यम्"

( धर्मराजाध्वरीन्द्रकृता वेदान्तपरि० )

अस्यायमर्थः —

अन्तः करणविशिष्टं चैतन्यं जीवः, अन्तःकरणोपहितं चैतन्यं जीवसाक्षी।

विशेषणं तद् भवति, यत् कार्यान्वयि सत् वर्तमानञ्च सत् व्यावर्तकं भवति। उपाधिः तद् भवति, यत् कार्यानन्वयि सत् वर्तमानञ्च सत् व्यावर्तकं भवति। यथा "नीलो घटः" इत्यत्र नीलरूपं कार्यान्वयि सत् वर्तमानञ्च सत् पीतादिघटात् नीलघटस्य व्यावर्तकमस्ति।

"कर्णशष्कुल्यवच्छिन्नं ( कर्णशष्कुल्युपहितं ) नभः श्रोत्रम्। इत्यत्र कर्णशष्कुली उपाधिर्वर्तते। नैयायिकाः उपाधिं परिचायकमपि वदन्ति।

अत्र केचन नैयायिकादयः पूर्वपक्षिणो वदन्ति—

जीवसाक्षिणो लक्षणकरणमेव अनुचितम्, यतः तस्यैव वस्तुनो लक्षण-करणमुचितं भवति यस्य सत्ता जगतीतले कुत्रापि अस्ति। प्रकृते जीवसाक्षिणः कुत्रापि सत्तैव नास्ति। अतः, तस्य लक्षणमेव न वाच्यमिति।

यदि अद्वैतवेदान्ती कथयेत्—जीवसाक्षिनामकमेकं तत्त्वमस्ति इति, तर्हि तेन एतत् न वाच्यम्, कुत इति चेदुच्यते—

जीवसाक्षिनामकं तत्त्वं न केनापि प्रमाणेन साधयितुं शक्यते।

यदि अद्वैतवेदान्ती वदेत्—घटादयो विषया जडत्वात् न स्वप्रकाशाः, अतः, तेषां विषयाणां प्रकाशार्थं जीवसाक्षी स्वीकार्य एव। किञ्च यदि साक्षी नाङ्गीक्रियते, तर्हि जगति वर्तमानेषु सकलेषु वस्तुषु अन्धतापरपर्यायो भासकाभावनामको दोषः प्रसज्येत; इति चेत् न, यतः विषयप्रकाशाय प्रमाण-चैतन्यमेव अलम्। इत्थमिदं सिद्ध्यति यत् प्रमाणाभावात् प्रयोजनाभावाच्च जीवसाक्षिनामकं तत्त्वं न स्वीकार्यमिति। अस्य पूर्वपक्षस्य खण्डनमद्वैत-वेदान्तिनो वक्ष्यमाणप्रकारेण कुर्वन्ति, ते कथयन्ति—

जीवसाक्षी अवश्यमेव स्वीकार्यः। जीवसाक्षिस्वीकारं विना तत्त-द्घटादिविषयाणामनुसन्धानं = यथार्थस्मृतिः न भवितुमर्हति।

यदि कश्चिद् ब्रूयात्—

चक्षुरादीन्द्रियस्वरूपेण करणेन एव विषयप्रत्यक्षं भविष्यति, ततश्च यथार्थानुभवजन्या यथार्थस्मृतिरपि भविष्यति, इति चेत् न, यतः, चक्षुराद्यने-कविधकरणसत्त्वाद् घटपटाद्यनेकविधविषयसत्त्वादुभयोर्जडत्वाच्च सर्वविषय-

सम्बद्धस्य नियामकस्य जीवसाक्ष्यपरपर्यायस्य चैतन्यस्य स्वीकारं विना गतिर्नास्ति ।

यदि पूर्वपक्षी वदेत्—प्रमातृस्वीकारेणैव सर्वं कार्यं सेत्स्यति, घटपटादिविषयप्रत्यक्षस्य सङ्गतिश्च भविष्यति, इति चेत् न, यतः, प्रमातुः अन्यविषयभासकत्वे कथञ्चित् साधितेऽपि स्वभासार्थं जीवसाक्षिणः आवश्यकता अस्त्येव, यतः, प्रमाता जडेन अन्तःकरणेन अवच्छिन्नः, मलिनेन अज्ञानेन आवृतश्च इतिहेतोर्न शक्नोति स्वं भासयितुम् ।

अतः, तस्य ( प्रमातुः ) स्वस्य प्रकाशार्थमस्ति अनिवार्या आवश्यकता अन्यस्य जीवसाक्षिनामकस्य स्वप्रकाशस्य । तदेव उच्यते—जीवसाक्षी स्वप्रकाशार्थं नान्यं कमपि प्रकाशकमपेक्षते, यतः स जीवसाक्षिनामकः पदार्थः पारमार्थिकरूपेण शुद्धब्रह्मणो भिन्नो नास्ति, अपि तु तत्स्वरूप एव । अतः, सः स्वयमेव स्वं परञ्च भासयितुं समर्थोऽस्ति ।

यदि कश्चिच्छङ्केत—

निरपेक्षरूपेण जीवसाक्षिणः स्वपरभासकत्वे स्वीकृते चैत्रेण घटे ज्ञाते सति मैत्रस्यापि घटज्ञानापत्तिर्दुर्वारा इति ।

अत्र वेदान्तिभिः प्रतिविधीयते—

भोः पूर्वपक्षिन् ! मैत्रसाक्षिणः चैत्रानुभूतस्य घटादेर्विषयस्य ज्ञानं किं ( १ ) स्वप्रकाशचैतन्येन सह अभेदात् भवति अथवा सर्वज्ञत्वाद्यभिमतेन ( २ ) मायाविशिष्टचैतन्येन सह अभेदात् भवति अथवा ( ३ ) चैत्रान्तःकरणोपहितचैतन्येन सह अभेदात् भवतीति । तत्र प्रथमः पक्षः न स्वीकरणीयः, यतः, स्वप्रकाशचैतन्यस्य निर्विकारत्वात् तेन निरुपाधिकेन स्वप्रकाशेन च ब्रह्मणा सह अन्तःकरणोपहितजीवसाक्षिणः अत्यन्ताभेदः एव न भवितुमर्हति ।

द्वितीयोऽपि पक्षो न स्वीकरणीयः, यतः अन्तःकरणोपहितस्य जीवसाक्षिणः मायाविशिष्टेन मायोपहितेन वा परमेश्वरेण सह अत्यन्तं भेदः पूर्वपक्षिणा भवता अपि स्वीकृतोऽस्ति ।

तृतीयोऽपि पक्षो न स्वीकरणीय, यतः चैत्रान्तःकरणमैत्रान्तःकरणयोर्भिन्नदेशस्थितत्वादभेदः कदापि न सम्भवति; यतः, अभेदार्थमेकदेशे स्थितिः समपेक्षिता भवति ।

अतः, अन्तःकरणधर्मप्रातिभासिकविषयप्रत्यक्षानुपपत्तिरूपया अर्थापत्या जीवसाक्षी प्रमाणितो भवति । अर्थापत्तिस्वरूपञ्च—उपपाद्यज्ञानेन उप-

पादकज्ञानम्। प्रकृते—जीवसाक्षिस्वीकारं विना अन्तःकरणधर्मस्य प्रातिभासिकविषयप्रत्यक्षस्य च अनुपपत्तिर्भविष्यति, अतः, तदुपपादकः जीवसाक्षी स्वीकार्यो भवति।

किञ्च—"**साक्षी चेता केवलो निर्गुणश्च**" इति श्रुतिरूपागमप्रमाणेन अपि जीवसाक्षी सिद्ध्यति।

यदि कश्चिद् वदेत्—इयं श्रुतिः ईश्वरविषयिणी इति, तर्हि नेदं वक्तुं शक्यते, यतः मायाविशिष्टे ईश्वरे "केवलो निर्गुणश्च" इति विशेषणयोः सङ्गतिर्न भवितुमर्हति।

अतः, प्रमाणितं भवति यत् जीवात् ईश्वराच्च अतिरिक्तः जीवसाक्षी ( व्यवहारसत्तावसरे ) अस्ति। स च प्रतिशरीरं पृथक् पृथक् वर्तते।

यथा तेषां तेषां घटपटादिविषयाणां भेदात् विषयचैतन्यं नाना अस्ति, तथा चैत्रमैत्राद्यन्तःकरणानां नानात्वात् तदुपहितः जीवसाक्षी अपि नाना अस्ति। अन्तःकरणं जीवसाक्षिणः उपाधिरस्ति, न तु विशेषणमस्ति, यतो विशेषणं कार्यान्वयि व्यावर्तकञ्च भवति, उपाधिस्तु कार्यानन्वयी व्यावर्तको वर्तमानश्च भवति, इति पूर्वमेव उक्तं वर्तते। उपलक्षणन्तु कार्यानन्वयि व्यावर्तकञ्च।

अन्तःकरणं नाम संशयनिश्चयगर्वस्मरणात्मकवृत्तिमदान्तरं करणम्। अयमत्र विशेषः—प्रमात्रे घटादिर्विषयः सर्वदा प्रत्यक्षो नास्ति, किन्तु विषयचैतन्याभेदेन सः प्रत्यक्षोऽस्ति। यदा प्रमातृचैतन्यस्य तेन तेन विषयचैतन्येन सह एकदेशस्थत्वादिरीत्या अभेदो भवति तदा एव प्रमातुः घटादिविषयकं प्रत्यक्षं भवति, नान्यथा। विषयगतं प्रत्यक्षत्वं नाम स्वाकारवृत्त्युपहितप्रमातृचैतन्यसत्तातिरिक्तसत्ताकत्वशून्यत्वे सति योग्यत्वम्।

ज्ञानगतं प्रत्यक्षत्वं नाम तत्तदिन्द्रिययोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वम्।

वेदान्तदर्शने साक्षिविषये एते वादा उपलभ्यन्ते—

१—सोपाधिको जीव एव साक्षी।

२—मायोपहितं चैतन्यं साक्षी ( ईश्वरः साक्षी )।

३—मायोपलक्षितं ब्रह्म साक्षी ( ईश्वरसाक्षी )।

४—शुद्धं ब्रह्म साक्षी।

५—अन्तःकरणोपलक्षितं कूटस्थं ब्रह्म साक्षी ( जीवसाक्षी )।

जीवसाक्षिविषये पूर्वं प्रस्तुतं विवेचनं पर्याप्तमास्ते ।

ईश्वरसाक्षिविषये इदं विवेचनीयं वर्तते—

मायोपहितं चैतन्यमीश्वरसाक्षी इत्युच्यते । ईश्वरो मायाविशिष्टं चैतन्यं वर्तते, अतः, तस्यापि स्वस्य प्रकाशाय ईश्वरसाक्षिणः आवश्यकता वर्तते । अन्तःकरणानामनेकत्वात् जीवसाक्षी नाना इति पूर्वमेव स्पष्टीकृतम्, किन्तु ईश्वरस्य एकत्वात् ईश्वरसाक्षी एक एव इत्यवधेयम् ।

केषाञ्चिन्मते शुद्धं ब्रह्मैव साक्षिरूपेण स्वीक्रियते । अपरेषां मते तु कूटस्थं ब्रह्म साक्षिरूपेण प्रतिपाद्यते ॥

साक्षिविषये श्रीमदप्पय्यदीक्षितैर्विरचिते "सिद्धान्तलेशसङ्ग्रहे" श्रीधर्मराजाध्वरीन्द्रैः कृते "वेदान्तपरिभाषाग्रन्थे, अन्यत्रापि बहु विवेचनं कृतं वर्तते, किन्तु विस्तरभयाद् मया अत्रैवेदं विवेचनं पूर्णतां नीयते ।

—:-०-:—

# ॐकारस्य स्वरूपं महत्त्वञ्च

'ॐ इत्येकाक्षरं ब्रह्म' श्रीमद्भगवद्गीता अ० ८ श्लो० १३ । इत्यादिभगवद्वचनानुसारम् ॐकारः ब्रह्माभिन्नः ब्रह्मस्वरूपश्च वर्तते ।

आत्मबोधोपनिषदि अपि कथितमस्ति **'यत् प्रत्यगानन्दं ब्रह्म पुरुषं प्रणवस्वरूपम् अकार उकार मकार इति त्र्यक्षरं प्रणवम्, तदेतदोमिति यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात् ।'** आत्मबोधोपनिषद्–खण्ड–१ मं. १ ।

अनेनापि वचनेन इदमेव सिध्यति यत् ॐकारः ब्रह्मस्वरूपः । अत एव **ॐकारः समग्रस्यापि प्रपञ्चस्य आदिः, आरम्भकः अधिष्ठानं लयस्थानञ्च वर्तते । 'तस्माद् वा' एतस्मादात्मन आकाशः सम्भूतः'** इत्यादिरूपा (तैत्तिरीयोपनिषद्–द्वितीया ब्रह्मानन्दवल्लीमं. १ ) तैत्तिरीयश्रुतिरपि ॐकाराभिन्नमात्मरूपं ब्रह्म एव निर्दिशति ।

अयमेव ॐकारः सनातनधर्मिणाम् उपास्यानां देवतानां स्वरूपस्य मूलं वर्तते । भगवतो महागणपतेः शुण्डादण्डो, मुखाकृतिः, तुन्दमित्येतत्सर्वं स्वरूपं सुस्पष्टतया ॐकारे दरीदृश्यते । एवमेव भगवतः शङ्करस्य, महाविष्णोः दुर्गायाः सूर्यनारायणस्य च स्वरूपं साधकैः ॐकारे चिन्त्यते, विलोक्यते

स्वीक्रियते च। ये जनाः भगवन्तं सुब्रह्मण्यनामानं स्वामिनं कार्तिकेयं ध्यायन्ति पूजयन्ति च, तेऽपि आराधनीयं तं देवं सुब्रह्मण्यम् ॐकारे प्रतिष्ठितं मन्यन्ते।

एवमेव ये आधुनिका भौतिकविज्ञानवादिनो विद्वांसो नास्तिकाश्च वर्तन्ते, तेऽपि ॐकारं तद्गतं बिन्दुञ्च सर्वस्यापि भौतिकस्य जगतो मूलं स्वीकुर्वन्ति। ते तमेव बिन्दुं परमं परमाणुं सूक्ष्मदर्शकयन्त्रेण प्रत्यक्षं कुर्वन्ति। ॐकारः पञ्चावयवात्मकः इत्यपि केचन स्वीकुर्वन्ति। ॐकारः पञ्चकलात्मकः इति शास्त्रविदः पुराणानि च स्वीकुर्वन्ति प्रतिपादयन्ति च। शिवमहापुराणे प्रतिपादितमस्ति—

वर्णपञ्चकरूपोऽयमेवं प्रणव उद्धृतः।
त्रिमात्रबिन्दुनादात्मा मुक्तिदो जपतां सदा॥
ब्रह्मादिस्थावरान्तानां सर्वेषां प्राणिनां खलु।
प्राणः प्रणव एवायं तस्मात्प्रणव ईरितः॥
आद्यं वर्णमकारञ्च उकारमुत्तरे ततः।
मकारं मध्यतश्चैव नादान्तं तस्य चोमिति॥
अकारस्तु महद्बीजं रजः स्रष्टा चतुर्मुखः।
उकारः प्रकृतिर्योनिः सत्त्वं पालयिता हरिः॥
मकारः पुरुषो बीजी तमः संहारको हरः।
बिन्दुर्महेश्वरो देवस्तिरोभाव उदाहृतः॥
नादः सदाशिवः प्रोक्तः सर्वानुग्रहकारकः।
नादमूर्धनि सञ्चिन्त्यः परात्परतरः शिवः॥

(शिवमहापुराणे कैलाससंहितानाम्। अ. ३ श्लो. १३,१४,१५,२१,२२,२३)

अनेन शिवमहापुराणोक्तेन प्रमाणेन सुस्पष्टं भवति यत् ॐकारस्य इमाः पञ्चकलाः सन्ति—

१—अकारः
२—उकारः
३—मकारः
४—नादः
५—बिन्दुः

योगिनां मते ॐकारः नादब्रह्मात्मको वर्तते । हठयोगिनां मते अनाहत-नादरूपो वर्तते ।

इदानीं तस्य एतस्य ॐकारस्य विषये तत्तच्छास्त्रमनुसृत्य विचारः प्रस्तूयते—

श्रीमद्भगवद्गीताशास्त्रानुसारमुपनिषदनुसारं वा ॐकारः सर्वेषां वेदानामादिः भगवत्स्वरूपश्च वर्तते । भगवता श्रीकृष्णेन कथितमपि—

**'प्रणवः सर्ववेदेषु ।'**

( श्रीमद्भगवद्गीता--अ. ७ श्लो. ८ । )

मनुस्मृतौ कथितमस्ति—

**अकारं चाप्युकारञ्च मकारञ्च प्रजापतिः ।**
**वेदत्रयान्निरदुहद् भूर्भुवः स्वरितीति च ॥**

( मनुस्मृतिः—अ. २ श्लो. ७६ )

द्विजः पूतः सन् ॐकारमुच्चारयितुमर्हति इत्यपि तत्रैवोक्तम्—

**प्राक्कूलान पर्युपासीनः पवित्रैश्चैव पावितः ।**
**प्राणायामैस्त्रिभिः पूतस्तत ॐकारमर्हति ॥** ( मनुस्मृतिः–अ. २ श्लो. ७५ )

यद्यपि केचन वदन्ति यत् ॐकारः विरक्तानामेव उपास्योऽस्ति, परन्तु ब्रह्मसूत्रशाङ्करभाष्यस्य रत्नप्रभाटीकायां स्मृत्यात्मकं प्रमाणमुपस्थाप्य गोविन्दानन्दभगवत्पादैः ॐकारो माङ्गलिकः, इति प्रतिपादितम् । तद् यथा—

**ॐकारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा ।**
**कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकाविमौ ॥**

[ ब्र. सू. शा.भा. रत्नप्रभाटीका अ. १ पा.१ सू. १, खेमराज संस्करणम् सं. १८७० ]

अत एव, ॐकारः गृहस्थैरपि उच्चारयितुं शक्य इति फलितं भवति ।

पूर्वमीमांसाशास्त्रानुसारं तेषु तेषु अनुष्ठानेषु अनेकत्र पठ्यमानेभ्यो मन्त्रेभ्यः प्राक् ॐकारो योज्यते । ॐकारं विना मन्त्रेषु विशिष्टं बलं नायाति, इति मन्त्रविदां मतम् । मेरुतन्त्रे उक्तम्—

**तारामायापुराः सर्वे जप्तव्याः केवला न हि ।**

( मेरुतन्त्रे पृ० १४ श्लो० ५० ) ।

अत एव पठ्यमानो मन्त्रः 'हरिः ॐ गणानां त्वा०' इत्यादि रूपेण प्रारभ्यते। एवमेव सङ्कल्पादौ अपि ॐ विष्णवे नमः' इत्यादि पठ्यते।

ब्राह्मणाः अन्येऽधिकारिणो वा गायत्रीमन्त्रस्य उच्चारणात् प्राक् ॐकारसहिता व्याहृतीः उच्चारयन्ति। सर्वस्य जगत्प्रपञ्चस्य आदिरपि ॐकार एव इति पूर्वमेव प्रतिपादितम्। ॐकारविषये श्रीमद्भागवते तेषु तेषु स्थानेषु अधो लिखितानि वचनानि उपलभ्यन्ते—

"इन्द्रियाणि मनस्यूर्मौ वाचि वैकारिकं मनः।
वाचं वर्णसमाम्नाये तमोङ्कारे स्वरे न्यसेत्।
ॐकारे बिन्दौ नादे तं तं तु प्राणे महत्यमुम्॥"
एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः।
देवो नारायणो नान्य एकोऽग्निर्वर्ण एव च॥
हृद्यविच्छिन्नमोङ्कारं घण्टानादं बिसोर्णवत्।
प्राणेनोदीर्य तत्राथ पुनः संवेशयेत् स्वरम्॥
एवं प्रणवसंयुक्तं प्राणमेव समभ्यसेत्।
दशकृत्वस्त्रिषवणं मासादर्वाग् जितानिलः॥
वेदः प्रणव एवाग्रे धर्मोऽहं वृषरूपधृक्।
उपासते तपोनिष्ठा हंसं मां मुक्तकिल्बिषाः॥

[ १—श्रीमद्भागवतम्– स्कं. ७ अ. १५ श्लो. ५३
२— ,, –स्कं. ९ अ. १४ श्लो. ४८
३— ,, –स्कं. ११ अ. १४ श्लो. ३४–३५
४— ,, –स्कं. ११ अ. १७ श्लो. ११ ]

व्याकरणशास्त्रानुसारमपि ॐकारः सर्वस्यापि वाक्प्रपञ्चस्य मूलमस्ति। तैस्तैर्वैयाकरणैः ॐकारविषये स्वस्य ग्रन्थे विचारः कृतः। दिग्दर्शनार्थं प्रमाणमेतत् वाक्यपदीयान्तर्गतं पद्यं प्रस्तूयते—

सत्या विशुद्धिस्तत्रोक्ता विद्यैवैकपदागमा।
युक्ता प्रणवरूपेण सर्ववादाविरोधिनी॥

( वाक्यपदीयम्—काण्ड १ कारि० ९ )

इदानीं योगशास्त्रानुसारमोङ्कारविषये विवरणमुपस्थाप्यते। महर्षिणा पतञ्जलिना—**तस्य वाचकः प्रणवः**—( पातञ्जलयोगदर्शनम्—पा. १ सू. २७ ) इत्यस्मिन् सूत्रे' ॐकारः ईश्वरस्य वाचकः, ईश्वरश्च ॐकारस्य वाच्यः, इति प्रतिपादितम्।

अधुना अद्वैतवेदान्तानुसारमोङ्कारस्य महत्त्वं प्रस्तूयते—

छान्दोग्योपनिषदि ॐकारस्य उपासना परब्रह्मसाक्षात्कारे महती उपयोगिनी इति स्पष्टं प्रतिपादितमस्ति—**'ओमित्येदक्षरमुद्गीथमुपासीत'** ( छान्दोग्योपनिषद् अ० १ ख० ४ मं. १ )

कठोपनिषदि कथितमस्ति—

**सर्वे वेदा यत्पदमामनन्ति**
**तपांसि सर्वाणि च यद्वदन्ति।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति**
**तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्॥**

**एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्।**
**एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते॥**
**एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम्।**
**एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्॥**

( कठोपनिषद् अ. १ व. २ मं. १५, १७, १६ )

प्रश्नोपनिषदि अपि वर्तते—

अथ हैनं शैब्यः सत्यकामः पप्रच्छ। स यो ह वै तद्भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत। कतमं वाव स तेन लोकं जयतीति तस्मै स होवाच॥ १॥ एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः। तस्माद् विद्वानेतेनैवाऽऽयतनेनैकतरमन्वेति॥ २॥ ( प्रश्नोपनिषद्–प्रश्न–५ मं. १,२ )

तस्यामेव उपनिषदि अग्रेऽपि कथितं वर्तते—

ऋग्भिरेतं यजुर्भिरन्तरिक्षं
सामभिर्यत् तत्कवयो वेदयन्ते।
तमोङ्कारेणैवायतनेनान्वेति विद्वान्
यत्तच्छान्तमजरममृतमभयं परं चेति॥

( प्रश्नोपनिषदि प्रश्नः-५ मन्त्रः ७ )

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते। (मुण्डकोपनिषद्-मुण्डक-२ खण्ड-२-मं० ४ )। 'ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात्।' ( मुण्डकोपनिषद्-मुण्डक-२ खण्ड २-मं० ६ )। माण्डूक्योपनिषदि अपि कथितम्—'ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद भविष्यदिति सर्वमोङ्कार एव। यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव।' ( माण्डूक्योपनिषद्—मं० १ )।

सोऽयमात्माध्यक्षरमोङ्कारोऽधिमात्रं पादा मात्रा मात्राश्च पादा अकार उकारो मकार इति। ( माण्डूक्योपनिषद्—मं० ८ )।

'अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत एवमोङ्कार आत्मैव संविशत्यात्मनाऽऽत्मानं य एवं वेद य एवं वेद।' ( माण्डूक्योपनिषद्—मं० १२ )।

तैत्तिरीयोपनिषदि अपि कथितं वर्तते—

ओमिति ब्रह्म। ओमितीदं सर्वम्। 'ॐ' इत्येतदनुकृतिर्हस्म वा अप्यो श्रावयेत्याश्रावयन्ति।

ओमिति सामानि गायन्ति। ॐ शोमिति शस्त्राणि शंसन्ति। ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति। ओमिति ब्रह्मा प्रसौति। ओमित्यग्निहोत्रमनुजानाति। ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति। ब्रह्मैवोपाप्नोति। ( तैत्तिरीयोपनिषद्—वल्ली-१ अनुवाक—८ )।

श्वेताश्वतरोपनिषदि अपि कथितमस्ति—

वह्नेर्यथा योनिगतस्य मूर्ति-
र्न दृश्यते नैव च लिङ्गनाशः ।
स भूय एवेन्धनयोनिगृह्य-
स्तद्वोभयं वै प्रणवेन देहे ॥

( श्वेताश्वतरोपनिषद् अ० १ मं० १३ )

स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासाद् देवं पश्येन्निगूढवत् ॥

( श्वेताश्वतरोपनिषद् अ० १ मं० १४ )

ब्रह्मविद्योपनिषदि अपि कथितमस्ति—

'ॐ' इत्येकाक्षरं ब्रह्म यदुक्तं ब्रह्मवादिभिः ।

( ब्रह्मविद्योपनिषद्–मं० २ )

कांस्यघण्टानिनादस्तु यथा लीयति शान्तये ।
ओङ्कारस्तु तथा योज्यः शान्तये सर्वमिच्छता ॥

( ब्रह्मविद्योपनिषद्–मं० १२ )

त्रिशङ्खं वज्रमोङ्कारमूर्ध्वनालं भ्रुवोन्मुखिम् ।
कुण्डलीं चालयन् प्राणान् भेदयन् शशिमण्डलम् ॥

( ब्रह्मविद्योपनिषद्–मं० ७४ )

क्षुरिकोपनिषदि अपि कथितं वर्तते—

मात्रा द्वादशयोगेन प्रणवेन शनैः शनैः ।

( क्षुरिकोपनिषद्–मं० ३ )

योगतत्त्वोपनिषदि अपि कथितं वर्तते—

दीर्घप्रणवसन्धानं सिद्धान्तश्रवणं तथा ।

( योगतत्त्वोपनिषद्–मं० २७ )

ततो रहस्युपाविष्टः प्रणवं प्लुतमात्रया ।

( योगतत्त्वोपनिषद्–मं० ६३ )

सर्वविघ्नहरो मन्त्रः प्रणवः सर्वदोषहा ॥

( योगतत्त्वोपनिषद्–मं० ६४ )

एवमेतावत्पर्यन्तं प्रस्तुतैस्तैस्तैः सनातनधर्मसम्मतग्रन्थोक्तैः प्रमाणैर्विविधाभिर्युक्तिभिश्च ओङ्कारस्य लौकिकं वैदिकं पारलौकिकञ्च परमं महत्त्वं सिद्धं भवति ।

—:०:—

## विविधशास्त्रविचारनामकस्तरङ्गः

## काश्मीरशैवागमे वैदिकी दृष्टिः

अप्रमेयत्रयातीतनिर्मलज्ञानमूर्तये ।
मनोगिरां विदूराय दक्षिणामूर्त्तये नमः ॥

अस्मद्गुरुपरम्परानुसारिणी इयं मान्यता वर्तते यत् यथा वेदा अपौरुषेयास्तथा आगमशास्त्रमपि अपौरुषेयम् । यथा च वेदानामुपदेष्टा भगवान् तथैव आगमोपदेष्टा अपि भगवानेव ।

तथापि 'काश्मीरशैवागमे वैदिकी दृष्टिः' इत्येतं विषयमवलम्ब्य किञ्चित् प्रस्तौमि ।

यथा वेदे कर्मकाण्डम् उपासनाकाण्डम्, ज्ञानकाण्डञ्चेति त्रयः विभागा विधीयन्ते, तथैव आगमशास्त्रेऽपि इदानीं दृश्यते । उदाहरणार्थं न्यासाः, दीक्षापद्धतिः, आसनविध्यादयश्च कर्मकाण्डरूपाः; देवोपासनाः उपासनाकाण्डरूपाः; त्रिपुरोपनिषदादयः ज्ञानकाण्डरूपाः ।

केचन विद्वांसो मन्यन्ते यत् येषां जनानां वैदिके कर्मणि अधिकारः प्रवेशो वा नास्ति, तेषां कृते आगमशास्त्राणि वर्तन्ते, किन्तु नेदं कथनं सत्यम् । आगमानामपि तादृशमेव महत्त्वं वर्तते, यादृशं वेदानाम् ।

'अधिकारिविभेदेन शास्त्राण्युक्तानि सर्वतः' ।

इत्युक्तेः येषां यादृशो जन्मान्तरीयः संस्कारस्तेषां तस्मिन् मार्गे प्रवृत्तिः, तेनैव मार्गेण गमने कृते सिद्धिश्च ।

अतएव काश्मीरशैवागमे प्रतिपादितानि सर्वाण्येव तत्त्वानि भिन्नैः शब्दैर्वेदे प्रतिपादितानि उपलभ्यन्ते । तान्येव इदानीं सप्रमाणमुपस्थाप्यन्ते ।

यथा—'शिवो नः सुमना भव' इत्यस्मिन् मन्त्रे शिवः प्रतिपादितः ।

**या ते रुद्र शिवा तनूरघोरा (अ) पापकाशिनी तया नस्तनुवा शन्तमया गिरिशन्ता ( अ ) भिचाकशीहि ।**

इत्यस्मिन् मन्त्रे शिवा प्रतिपादिता ।

**ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोऽम् ।**

इत्यस्मिन् मन्त्रे ईश्वरः, पञ्चभूतानि, सदाशिवः, विद्या, शुद्धविद्या चेति तत्त्वाष्टकं प्रतिपादितं वर्तते ।

**वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ।**

इत्यस्मिन् मन्त्रे कालः कला, बलं मनश्चेति चत्वारि तत्त्वानि प्रतिपादितानि सन्ति ।

**इमाग् रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतिम् ।**

इत्यस्मिन् मन्त्रे बुद्धितत्त्वं प्रतिपादितं वर्तते ।

**सहस्रशीर्षा पुरुषः०** इत्यादिमन्त्रे पुरुषः प्रतिपादितः वर्तते ।

**मुखं किमस्य कौ बाहू कावूरू पादा उच्येते । चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत । श्रोत्राद् वायुश्च प्राणश्च मुखादग्निरजायत ।**

इत्यनयोर्मन्त्रयोः पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि तेषां विषयाश्चेति पञ्चदश तत्त्वानि सङ्केतितानि सन्ति ।

**अहं रुद्रेभिर्वसुभिश्चरामि०**, इत्यादिमन्त्रे अहङ्कारतत्त्वं प्रतिपादितं वर्तते ।

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्, इत्यस्मिन्नुपनिषन्मन्त्रे माया, प्रकृतिश्चेति तत्त्वद्वयं कथितं वर्तते ।

शं च मे मयश्चमे० कामश्च मे भगश्च मे० इत्यादि मन्त्रे रागो नियतिश्च इति द्वे तत्त्वे प्रतिपादिते ।

इत्थं सुनिश्चितं भवति यत् काश्मीरशैवागमे ( प्रत्यभिज्ञादर्शने ) शैव-दर्शने वा वैदिकी दृष्टिः पूर्णरूपेण वर्तते ।

इदानीं भगवन्तं महेश्वरं नत्वा स्वीयं लघुनिबन्धं पूरयामि ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

—:०:—

# लोकमान्यमहोदयस्य धार्मिकदृष्टिः

लोकमान्यबालगङ्गाधरतिलकमहोदयः सर्वतोमुखप्रतिभया सम्पन्नो महापुरुष आसीत् । सः अस्या एव प्रतिभाया बलेन भारतराष्ट्रस्य सर्वाङ्गीणा-मभिवृद्धिं कर्तुं विविधं प्रयत्नमकरोत् ।

स राष्ट्रस्य तत्तदावश्यकतानुरूपं समाजं विविधाभिर्दृष्टिभिरालोकयत्, तस्य समृद्धं सबलञ्च स्वरूपं परिभासयितुं प्रयत्नमप्यकरोत् । आस्वेव सामाजि-कार्थिकदार्शनिकादिदृष्टिषु लोकमान्यस्य एका दृष्टिः धार्मिकदृष्टिरप्यासीत् । तस्येयं धार्मिकदृष्टिः केवलं रूढिवादानुसारिणी नासीत्, अपि तु सामाजिक-दृष्ट्या सह वर्तमाना आसीत् अत एव सः सामूहिकं गणेशोत्सवं प्रारभत ।

श्रीगणेशः श्रीयुक्तस्य समाजस्य ईशः = नेता अस्ति । सः विघ्नकर्त्ता विघ्नहर्त्ता च । सः प्रथमपूज्योऽपि वर्तते । तस्य उत्सवः पुराणेतिहाससम्मतः, धर्मशास्त्रसम्मतः युगानुरूपः च अस्ति ।

लोकमान्यः आर्यधर्मस्य = सनातनवैदिकधर्मस्य संस्कृतेश्च दृढोऽनुयायी पोषकश्चासीत् । सः कारागारेऽपि सन्ध्यावन्दनादिकर्म समपादयत् । सः महान् राष्ट्रभक्तः आसीत् । सः हिमगिरिरिव लक्ष्यं प्रति अविचलः आसीत् ।

स जानाति स्म यत् समाजस्य सर्वेषामपि वर्गाणां धार्मिकाणां, रूढिवादिनाम्, आधुनिकतावादिनाम्, उग्रदृष्टिवादिनां शान्तदृष्टिवादिनाञ्च एकत्रीकरणाय एकमञ्चस्थापनाय च गणेशोत्सवः सफलं माध्यमं भवितुमर्हति। एतदेव विचार्य तेन गणेशोत्सवस्य प्रारम्भः कृतः। अयं विचारोऽपि तस्यानुपमायाः प्रतिभाया एकमुदाहरणमास्ते। सः अस्य सामूहिकगणेशोत्सवस्य प्रारम्भं पुण्यपत्तनेऽकरोत्।

क्रमेणास्योत्सवस्य विस्तारः विविधेषु नगरेषु ग्रामेषु चाभवत्। भाद्रकृष्णचतुर्थीतः प्रारभ्यमाणोऽयं महोत्सवः सामाजिकस्य धार्मिकस्य च सङ्घटनस्य केन्द्रमभवत्।

लोकमान्यस्य धार्मिकदृष्टेर्व्याख्या भगवद्गीतायाः (अ. ३ श्लो. ५) व्याख्यायां तेन स्वयमेव सुस्पष्टं कृता वर्तते। सः कथयति यत् स्वधर्मस्य कदापि परित्यागो न कर्तव्यः। सः धर्मं समग्रस्य जीवनस्य प्रधानबिन्दुं स्वीकरोति स्म। तस्य सुस्पष्टं मतमस्ति यत् धर्मच्युतं कर्म कदापि कर्मयोगो न भवितुमर्हति।

सः समर्थगुरुरामदासस्य सिद्धान्तवाक्यं **"आधी केले मग सांगितले"**। पूर्णरूपेण स्वीकरोति स्म। सः राष्ट्रियस्तरीयः नेता आसीत्। यथा कैश्चिदन्यैर्नेतृभिः स्ववेषभूषादीनां परित्यागो विहितः, तथा अनेन स्ववेषभूषादीनां परित्यागो न विहितः, अपि तु यत्र-तत्र सर्वत्र भारतीकवेषेणैव अयं विचरति स्म। अयं कदापि स्ववेषभूषादीनां संस्कृतेर्धर्मस्य वा उपेक्षां नाकरोत्। सः यथा विचारेषु दृढः आसीत्, तथैव धर्मेऽप्यासीत्।

स अद्वितीयः भारतभूमातुस्तिलकः आसीत्। स सर्वथा धन्यो मान्यश्चासीत्।

तस्य स्मरणे अधोलिखितां स्वविरचितां चतुश्लोकीं समर्प्य तं प्रणम्य च अहं स्वलेखन्यै विरामं ददामि—

**वन्द्यो वदान्यः समलोकमान्यो बालोऽप्यबालो ललितप्रचारः।**
**गङ्गाधराभिन्नतनूरुदारः कोऽप्येष धन्यस्तिलकोऽद्वितीयः ॥१॥**
**'स्वतन्त्रता नः सहजोऽधिकारः' सिद्धान्तमेतं चरितीचकार।**
**हिन्दुत्वमूर्तिः कमनीयकीर्तिः कोऽप्येष धन्यस्तिलकोऽद्वितीयः ॥२॥**

नृसोऽपि देवो वरभारताख्यभूमातृसङ्घोल्लासितभालशोभः ।
गीतोक्तसम्पादितकर्मयोगः कोऽप्येष धन्यस्तिलकोऽद्वितीयः ॥३॥
एतत्समाः स्याम वयं महान्तः स्वदेशभक्ताः परितः स्फुरन्तः ।
जयेन साकं पुनरुच्चरन्तः कोऽप्येष धन्यस्तिलकोऽद्वितीयः ॥४॥

—:०:—

## कालिदाससाहित्ये उल्लिखिता यागाः

भारतीया दार्शनिका उपासकाश्च विद्वांसो यागस्य महत्त्वं जानन्त्येव । वैदिककालादारभ्य अद्ययावत् ऐहिकानां पारलौकिकानाञ्च मनोरथानां पूरको यागः इति आपामरजनविदितम् ।

देवपूजाद्यर्थकाद् यज्धातोर्घञि प्रत्यये कृते यागशब्दो निष्पन्नो भवति । अस्य पर्यायवाचिनः, इष्टियज्ञहोमादयः शब्दाः सन्ति । ते च तैस्तैः कोशकारैस्तेषु तेषु कोशेषु प्रतिपादिताः ।

ते यागा वैदिकाः, पौराणिकाः, तान्त्रिकाः लौकिकाश्च वर्तन्ते । त एव दीर्घकालपरिसमाप्याः 'सत्र'शब्देन अभिधीयन्ते केषाञ्चिन्मतेन । श्रीमद्भागवतेऽप्युक्तम्—

नैमिषे निमिषक्षेत्र ऋषयः शौनकादयः ।
सत्रं स्वर्गाय लोकाय सहस्रसममासत ॥

( श्रीमद्भागवत स्कं. १ अ. १ श्लो. ४ )

वैदिकाः ( वेदोक्ताः ) यागास्त्रिविधाः—

कार्मकाण्डिकाः, औपासनाः आध्यात्मिकाश्च । श्रीमद्भगवद्गीतायां तु विविधा यागाः प्रतिपादिताः सन्ति । ते यथा—

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च.............................. ॥

( श्रीमद्भगवद्गीता अ. ४ श्लो. २८ )

कृष्णयजुर्वेदीयतैत्तिरीयशाखायां त्रिसुपर्णसूक्ते अन्तिमे खण्डे आध्यात्मिकयज्ञस्य स्वरूपं वर्णितमास्ते । तद् यथा—

तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमः शमयिता दक्षिणा वाग् होता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीध्रावद्ध्रियते सा दीक्षा यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्सञ्चरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो या व्याहृतिराहुतिर्यदस्य विज्ञानं तज्जुहोति यत्सायं प्रातरत्ति तत्समिधं यत्प्रातर्मध्यन्दिनं सायं च तानि सवनानि ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि य ऋतवस्ते पशुबन्धा ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणाः सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथ एतद्वैजरामर्यमग्निहोत्रं सत्रम् ।

प्रत्येकं वर्णानां तथा आश्रमिणाञ्च कृते विविधा यज्ञा वर्णाश्रमधर्मप्रकरणे कर्तव्यतया निर्दिष्टाः सन्ति तेषु तेषु स्मृत्यादिग्रन्थेषु । विस्तरभयादत्र तेषां विवेचनं न क्रियतेऽस्य निबन्धस्य लेखकेन । तत्र

पाठो होमश्चातिथीनां
सपर्या तर्पणं बलिः ।
एते पञ्च महायज्ञा
ब्रह्मयज्ञादिनामकाः ॥

एते यागाः गृहस्थानां कृते अवश्यकर्तव्यतया परिगणिताः धर्मशास्त्रे ।

कविकुलगुरुः कालिदासः स्वसाहित्ये भारतीयसंस्कृतेः आर्यधर्मस्य च उज्ज्वलं स्वरूपं निरूपितवानित्यत्र नास्ति कस्यापि विदुषो विसम्मतिः ।

अत एव तेन अमरकविशिरोमणिना यागानां यागाङ्गानाञ्च उल्लेखः तेषु–तेषु प्रसङ्गेषु कृतः स्वसाहित्ये ।

तत्र आदौ रघुवंशमहाकाव्यमाश्रित्य विचारः प्रस्तूयते—

महाराजो दिलीपो महर्षिं वसिष्ठं कथयति—

हविरावर्जितं होतस्त्वया विधिवदग्निषु ।
वृष्टिर्भवति सस्यानामवग्रहविशोषिणाम् ॥ (रघु. १,६२)

अग्रे रघुणा अनुष्ठितस्य विश्वजिद्यागस्य महत्त्वं वर्णयति कविः—

**स विश्वजितमाजह्रे यज्ञं सर्वस्वदक्षिणम् ।**

( रघु. ४,८६ )

यज्ञारम्भसूचिकाया दीक्षाया उल्लेखो दीक्षितदशरथस्वरूपे दृश्यताम्—

**अजिनदण्डभृतं कुशमेखलां**
**यतगिरं मृगशृङ्गपरिग्रहाम् ।**
**अधिवसंस्तनुमध्वरदीक्षिता-**
**मसमभासमभासयदीश्वरः ॥**

( रघु. ९,२१ )

'यूप'शब्दस्य उल्लेखो दृश्यताम्—

**ग्रामेष्वात्मविसृष्टेषु यूपचिह्नेषु यज्वनाम् ।**

( रघु. १,४४ )

अश्वमेधपर्यायवाचितुरङ्गमेधशब्दस्य उल्लेखेन सह 'अवभृथ' शब्दस्य उल्लेखो यज्ञसम्पन्नतां सूचयति । स यथा—

**जलानि या तीरनिखातयूपा**
**वहत्ययोध्यामनुराजधानीम् ।**
**तुरङ्गमेधावभृथावतीर्णै-**
**रिक्ष्वाकुभिः पुण्यतरीकृतानि ॥**

( रघु. १३,६१ )

महाराजेन दशरथेन अनुष्ठितायाः पुत्रीयेष्टेरुल्लेखो वर्तते रघुवंशस्य दशमे सर्गे । स यथा—

**ऋष्यशृङ्गादयस्तस्य सन्तः सन्तानकाङ्क्षिणः ।**
**आरेभिरे जितात्मानः पुत्रीयामिष्टिमृत्विजः ॥**

( रघु. १०,४ )

इदानीं कुमारसम्भवं महाकाव्यमाश्रित्य विचारः प्रस्तूयते—

कुमारसम्भवे ब्रह्मस्तुतिं कुर्वन्तो देवाः कथयन्ति—

**उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम् ।**
**कर्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम् ॥**

( कुमार. २,१२ )

ते अग्रे कथयन्ति—

**यज्वभिः सम्भृतं हव्यं विततेष्वध्वरेषु सः ।**
**जातवेदोमुखान्मायी मिषतामाच्छिनत्ति नः ॥**

( कुमार. २,४६ )

भगवान् शिवः पार्वतीविवाहानन्तरं सप्तर्षीन् कथयति—

**विवाहयज्ञे विततेऽत्र यूय-**
**मध्वर्यवः पूर्ववृता मयेति ।**

( कुमार. ७,४७ )

इदानीं मालविकाग्निमित्रनाटकमाश्रित्य विचारः प्रस्तूयते—

अस्य नाटकस्य पञ्चमेऽङ्के कञ्चुकिनो हस्तेन आनीतं यत् पत्रं विदिशाधीशोऽग्निमित्रो वाचयति तस्मिन् अश्वमेधयज्ञस्य उल्लेखोऽस्ति कुमारस्य वसुमित्रस्य पराक्रमस्यापि वर्णनमास्ते । ( मालवि० ५,१५ ) ।

इदानीमभिज्ञानशाकुन्तलनाटकमाश्रित्य विचारः प्रस्तूयते–अग्निशरणस्य उल्लेखो विलोक्यतां विद्वद्भिः—**अग्निशरणं प्रविष्टस्य किल शरीरं विना छन्दोमय्या वाचा**......

यत्र महर्षिः कण्वः शकुन्तलामाशिषा योजयति स प्रसङ्गो यज्ञसंस्थां सूचयति—

**अमी वेदिं परितः क्लृप्तधिष्ण्याः**
**समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।**
**अपघ्नन्तो दुरितं हव्यगन्धैर्-**
**वैतानास्त्वां वह्नयः पावयन्तु ॥**

( शाकु० ४, ८ )

यज्ञबलेः सङ्केतो दृश्यतां षष्ठेऽङ्के—

सहजं किल यद्विनिन्दितं
न खलु तत्कर्म विवर्जनीयम् ।
पशुमारणकर्मदारुणोऽ-
नुकम्पामृदुरेव श्रोत्रियः ॥
(शाकु० ४,१)

अभिज्ञानशाकुन्तलस्य सप्तमेऽङ्के मारीचः राजानं प्रति आशास्ते—

भवतु तव बिडौजाः प्राज्यवृष्टिः प्रजासु
त्वमपि विततयज्ञो वज्रिणं भावयेथाः ।
युगशतपरिवर्तैरेवमन्योन्यकृत्यैर्
नियतमुभयलोकानुग्रहश्लाघनीयैः ॥
(शाकु० ७,३४)

अयं श्लोको गीतासिद्धान्तं स्मारयति—

अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।
यज्ञाद् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥
(श्रीमद्भग० ३,१४)

एतावत्पर्यन्तं विहितेन विवेचनेन सुस्पष्टं भवति यत् कविकुलगुरुः कालिदासः स्वसाहित्ये तेषु तेषु प्रसङ्गेषु यागानां यागाङ्गानाञ्च उल्लेखं कृत्वा सहृदयान् भारतीयसंस्कृतौ आर्यधर्मे च योजयितुं श्लाघनीयं प्रयत्नं कृतवान् । अस्य महाकवेरीदृशीं विशेषतां मनसि विधाय वक्ष्यमाणेन श्लोकेन स्वीयं निबन्धमहं पूर्णतां नयामि—

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति येषां यशःकाये जरामरणजं भयम् ॥

—:०:—

# "वेदानामधियज्ञव्याख्यापरम्परा"

सर्वे जानन्त्येव यद् वेदा अस्माकं भारतीयानां सर्वस्वम्। **'यस्य निःश्वसितं वेदाः, तेने ब्रह्म हृदा य आदिकवये'** इत्यादिवाक्यैः वेदापौरुषेयत्वं सिद्धमेव।

ते वेदाः समये-समये तैस्तैराचार्यैः पौर्वात्यैः पाश्चात्यैर्विद्वद्भिश्च स्वस्व-दृष्टिकोणमाश्रित्य व्याख्याताः। तेषां मध्ये अस्माकं सर्वेषामपि भारतीयानां समादरणीयः सायणाचार्यः वेदानामधियज्ञव्याख्यापरम्परायाः प्रधानः आचार्यः। तमेव अनुसृत्य पाश्चात्यैराधुनिकैश्च दृष्टिकोणपरिवर्तनपुरस्सरं वेदानां व्याख्या कृता। अनेनैव हेतुना व्याख्याभेदा दरीदृश्यन्ते। वस्तुतस्तु वेदा यज्ञसम्पादनाय तद्द्वारा परमार्थसाधनाय प्रवृत्ताः।

उक्तञ्च वेदाङ्गज्योतिषग्रन्थे—

**वेदा हि यज्ञार्थमभिप्रवृत्ताः**
**कालानुपूर्वा विहिताश्च यज्ञाः।**

अनेन वचनेन इदं सिद्ध्यति यत् अनादिकालादेव वेदा यज्ञार्थमेव प्रवृत्ताः सन्ति। उक्तमपि—

**'यज्ञो वै विष्णुः'**

**'मन्त्रब्राह्मणयोर्वेदनामधेयम्'** इति वचनमनुसृत्य वेदो मन्त्रब्राह्मणात्मकः अस्माभिः स्वीकियते, न तु केवलसंहितारूपः। स पुनर्विधिमन्त्रनामधेयनिषे-धार्थवादरूपेण पञ्चधा विभक्तः। स सर्वोऽपि वेदः सार्थकः। तस्य एकमपि अक्षरं निरुद्देश्यकं नास्ति। अमुमेव सिद्धान्तमुररीकृत्य प्रवृत्ता भारतीया अधियज्ञवेदव्याख्यापरम्परा।

तत्र सर्वप्रथमम् ऋग्व्याख्यापरम्परा प्रस्तूयते—अस्यां परम्परायामुप-लब्धेषु व्याख्याग्रन्थेषु प्राथम्येन उपलब्धं भाष्यं स्कन्दस्वामिकृतं वर्तते।

अयं स्कन्दस्वामी गुर्जरप्रदेशीय आसीत्। अयं शतपथब्राह्मणभाष्य-कारस्य हरिस्वामिनः गुरुरासीत् इति हरिस्वामिना विरचिताद् भाष्यारम्भ-पद्यादवगम्यते।

अस्या ऋग्व्याख्यापरम्परायाः द्वितीयः विद्वान् आचार्यः उद्गीथः वर्तते। अस्य नाम्नः उल्लेखः सायणाचार्येण स्वभाष्ये कृतो वर्तते।

अस्या व्याख्यापरम्परायास्तृतीय आचार्यो माधवभट्टो वर्तते। अनेन कृतया टीकया समलङ्कृतम् ऋक्संहितायाः प्रथममष्टकं मद्रपुरीतः प्रकाशितमपि वर्तते।

अस्याः परम्परायाश्चतुर्थ आचार्यो वेङ्कटमाधवो वर्तते। अस्य प्रतिज्ञा वर्तते—

**वर्जयन् शब्दविस्तारं शब्दैः कतिपयैरिति—**

ऋग्भाष्यं कृतवानहमिति शेषार्थो विद्वद्भिरूह्यः। अस्याः परम्पराया अन्ये आचार्या वर्तन्ते धानुष्कयज्वा, आनन्दतीर्थः आत्मानन्दश्च।

अस्य निबन्धस्य लेखकेन पूर्वमेव प्रतिपादितं वर्तते यत् सायणाचार्यः अस्याः परम्परामालाया मध्यमणिर्वर्तते। अयं स्वज्येष्ठभ्रात्रा माधवाचार्येण प्रेरितः सन् ऋग्भाष्यं विरचितवान्।

श्रीमन्तः जानन्त्येव महाभाष्यकारेण आचार्यपतञ्जलिना कृतं वेदशाखानां परिगणनम्—एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्। नवधाथर्वणो वेदः—इति।

एतेषां चतुर्णामपि वेदानां काश्चन एव शाखा इदानीमुपलभ्यन्ते—इत्यपि तथ्यं नास्ति विदुषामविदितम्।

तत्र यजुर्वेदस्य माध्यन्दिनसंहितायाः प्रमुखौ द्वौ व्याख्याकारौ वर्तेते—आचार्य उव्वटः आचार्यो महीधरश्च।

काण्वसंहितायाः प्रधाना व्याख्याकारा वर्तन्ते—आचार्यः हलायुधः, आचार्यः सायणः आचार्यः अनन्तश्च।

तैत्तिरीयसंहितायाः प्रधाना व्याख्याकारा वर्तन्ते—आचार्यः सायणः, आचार्यः कुण्डिनः, आचार्यः भवस्वामी, आचार्यः गुहदेवः, आचार्यः क्षुरः, आचार्यः भट्टभास्करश्च।

सामसंहितायाः प्रधाना व्याख्याकारा वर्तन्ते—आचार्यो माधवः, आचार्यः भरतस्वामी, आचार्यो गुणविष्णुश्च।

अथर्वसंहितायाः प्रधानो व्याख्याकारो वर्तते आचार्यः सायणः।

ब्राह्मणग्रन्थानां व्याख्यासु उव्वटकृतं शतपथब्राह्मणभाष्यम्, गोविन्दस्वामिकृतमैतरेयब्राह्मणभाष्यम्, भवस्वामिकृतं तैत्तिरीयब्राह्मणभाष्यम्, जयस्वामिकृतं ताण्ड्यब्राह्मणभाष्यम्, भास्करमिश्रकृतमार्षेयब्राह्मणभाष्यम्, भरतस्वामिकृतं सामविधानब्राह्मणभाष्यम्—इत्येता व्याख्याः विद्वद्भिः आदृताः सन्ति।

यद्यपि परवर्तिभिराचार्यैः पौर्वात्यैः पाश्चात्त्यैर्विद्वद्भिश्च नूतनाभिः पद्धतिभिर्बुद्धिविलासेन च वेदानां विविधा व्याख्याः कृताः सन्ति, तथापि **'सर्वं पदं हस्तिपदे निमग्नम्'** इति न्यायेन भारतीयाधियज्ञव्याख्यापरम्परायामेव ताः सर्वा अपि व्याख्या गतार्था भवन्ति। अतएव इदानीन्तनेऽपि समये अधियज्ञव्याख्या विचारकैराद्रियते। अस्मादेव कारणात् वाराणसीनिवासिनौ—डॉ० जनार्दन गङ्गाधररटाटे डॉ० सुधाकरमालवीयः—इति नामकौ विद्वांसौ सायणनिर्दिष्टपद्धत्या राष्ट्रभाषायाम् ऋग्वेदस्य व्याख्यां कुर्वन्तौ वर्तेते। अतः, इयमेव परम्परा सर्वैरपि भारतीयैरादरणीया। अन्ते इदमेव निवेदयन् अहं स्वीयं निबन्धं पूरयामि—

**नद्यः समायान्ति यथा समुद्रं**
**व्याख्याः समायान्ति तथैव यज्ञम्।**
**बुधैस्ततो यज्ञपथप्रवृत्ता**
**व्याख्याः समग्रा अपि माननीयाः॥**

—:-o-:—

# "नारदीया हरिकीर्तनपद्धतिः"

सार रहिते अस्मिन् संसारे हरेर्भक्तिरेव सारमस्ति। सा हरिभक्तिर्नवविधा वर्तते। उक्तञ्च—

**श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।**
**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥**

एतेषु नव प्रकारेषु अन्यतमा भक्तिः कीर्तनभक्तिः। सा हरेः कीर्तनभक्तिर्यया पद्धत्या सम्पाद्यते सा पद्धतिः हरिकीर्तनपद्धतिरस्ति। नारदप्रवर्तिता सा पद्धतिः नारदीया कथ्यते।

मूलतः हरिभक्तिप्रवर्धिनी इयं पद्धतिः द्विविधा वर्तते। एका वैयासिकी हरिकीर्तनपद्धतिः अन्या नारदीया हरिकीर्तनपद्धतिः। प्रथमायाः पद्धतेः प्रवर्तकः महर्षिर्वेदव्यासो वर्तते। अस्यां पद्धतौ कथावाचकव्यासनामधारी कीर्तनकर्ता उच्चासने उपविश्य हरिकथाकीर्तनं करोति।

कालक्रमेण यदा दुर्युगे प्रवृत्ते सति भक्तिदेवी खिन्ना जाता, ज्ञानवैराग्यनामानौ तस्याः पुत्रौ सेवकाभावात् जराजीर्णकलेवरौ जातौ, तदा भक्तशिरोमणिर्देवर्षिर्नारदः त्रयाणामपि कल्याणं सुखञ्च साधयितुं नवीनां हरिकीर्तनपद्धतिं प्रावर्तयत्। सः देवदत्तां महतीनाम्नीं वीणां वादयति हरिकीर्तनञ्च कुर्वन् एतान् भक्तिमार्गे प्रवर्तयति। श्रीमद्भागवते कथितं देवर्षेर्नारदस्य वचनमेव अत्र प्रमाणं वर्तते।

सः कथयति—

**देवदत्तामिमां वीणां स्वरब्रह्मविभूषिताम्।**
**मूर्च्छयित्वा हरिकथां गायमानश्चराम्यहम्॥**

(श्रीमद्भा० १, ६, ३३)

नारदीयकीर्तनपद्धतौ वक्ता स्थितः सन् मध्ये-मध्ये अग्रे पृष्ठे च किञ्चिद् विचरंश्च वीणां गृहीत्वा नादब्रह्मणः उपासनां कुर्वन् भगवतो गुणान् गायन् समाजे धर्मस्य, भक्तेः संस्कृतेश्च प्रचारं करोति।

इयमेव कीर्तनपद्धतिः इदानीं समग्रे भारतवर्षे विविधैर्नामभिः जनैः परिचीयते। वङ्गप्रदेशे इयमेव पद्धतिः गौडीयं सङ्कीर्तनम्, उत्तरप्रदेशे नामसङ्कीर्तनम्, पञ्चनदप्रदेशे सबद-भजनम्, सुदूरे दक्षिणप्रदेशे हरिकथाकालक्षेपम्, महाराष्ट्रे कीर्तनम् अथवा हरिकथा—इत्यादिभिर्नामभिः व्यवह्रियते।

महाराष्ट्रे इयमेव कीर्तनपरम्परा शाखाद्वयरूपे विकासं प्राप्तवती। तत्र एका 'वारकरीसम्प्रदायः, इति नाम्ना प्रसिद्धा। अपरा 'नारदीय सङ्कीर्तनपद्धतिः इति मूलनाम्ना अद्यापि प्रसिद्धा वर्तते।

अस्यां पद्धतौ कीर्तनकारः धौतम् अथवा रञ्जितं कौशेयं, कञ्चुकं तदुपरि उत्तरीयं, ललाटे भव्यं तिलकं, शिरसि विशिष्टाकारम् उष्णीषञ्च

धारयति । सः हस्तयोर्लध्वाकारं झञ्झावाद्यं गृहीत्वा मध्ये-मध्ये तद् वादयन् भगवन्नामजयकारपूर्वकं हरिकथां करोति । भगवद्भजनगीतगायनावसरे कार्त्तन तस्य स्वरमाधुर्यं विस्तारयन्तौ उभयोः पार्श्वयोः द्वौ वाद्यवादकौ उपविशतः । तयोर्मध्ये एकः वातस्वरपूरिकां त्रिसप्तकस्वरविभूषितां वादयति । अन्यः यदा वक्ता कथामारभते, तदा सः मङ्गलाचरणं पद्यम् एकं बोधप्रदं गीतञ्च सस्वरं गायति, सहैव वीणामपि वादयति ।

तस्य उभयोः पार्श्वयोः स्थितौ वाद्यवादकौ तदधीनौ भवतः, तौ तस्य स्वरमनुसृत्यैव सङ्गत्यर्थं वाद्यं वादयतः । सः गीतगायनानन्तरं स्वहस्तस्थां वीणां स्वपृष्ठभागे स्थितस्य सहायकस्य हस्ते स्थापयति । कदाचित्-कदाचित् कीर्तनकारस्य पृष्ठभागे कौचन सहयोगिनौ तादृशौ भवतः यौ गायने कण्ठस्वरेण तस्य सहायतां कुरुतः । समग्रं हरिकीर्तनं भागत्रये विभक्तं भवति । प्रथमो भागः पूर्वरङ्गः उच्यते । द्वितीयो भागः मध्यान्तरम् उच्यते । तृतीयो भागः उत्तररङ्गः उच्यते । पूर्वरङ्गे तन्मूलपद्यं गीयते यद् आश्रित्य समग्रं ब्रह्मनिरूपणं भक्तिमाहात्म्यप्रतिपादनं समाजजागरणञ्च इति सर्वमभीष्टं सम्पाद्यते । तत् पद्यं वक्ता स्वयं सस्वरं गायति । वाद्यवादकौ वाद्यं वादयतः । तदुदाहरणं यथा—

गोविन्दं प्रणमोत्तमाङ्ग रसने तं घोषयाहर्निशं
पाणी पूजयतं मनः स्मर पदे तस्यालयं गच्छतम् ।
एवञ्चेत् कुरुथाखिलं मम हितं शीर्षादयस्तद् ध्रुवं
न प्रेक्षे भवतां कृते भवमहाशार्दूलविक्रीडितम् ॥

कीर्तनकारः एतादृशं पद्यमाश्रित्य दृष्टान्तान् उपस्थाप्य सिद्धान्तं प्रतिपादयति । तदनन्तरं सः हरिनामसङ्कीर्तनं करोति कारयति च । तदनन्तरं पुनर्भगवन्नाम्नो जयकारः सर्वैः क्रियते । तदनु मध्यान्तरं भवति । प्रधानः आयोजकः वक्तारं तत्सहायकांश्च माल्यवस्त्रादिना तिलकेन च सत्करोति । तदनन्तरं सर्वेषां श्रोतॄणां ललाटानि प्रसादरूपेण कृष्णवर्णेन 'बुक्का' नामकेन चूर्णद्रव्येण विभूष्यन्ते । तदनन्तरम् उत्तररङ्गे वक्ता प्रधानं किमपि पौराणिकम् ऐतिहासिकम् आख्यानं चरित्रं वा श्रावयति; मध्ये-मध्ये तासु-तासु भाषासु प्रसिद्धैः सुभाषितैः श्लेषोक्त्या वक्रोक्त्या च जनानुरञ्जनं जनबोधनञ्च करोति । आख्याननायकः अन्यानि च पात्राणि यां प्रादेशिकीं भाषामाश्रिताः, तामेव भाषामाश्रित्य वक्ता कथां संवादांश्च उपस्थापयति । सफलस्य वक्तुः कृते शास्त्रीयसङ्गीतस्य गभीरं ज्ञानम्, वाद्यवादननैपुण्यम्,

विविधानां भाषाणां भाषणस्य सामर्थ्यम्, मधुरः कण्ठस्वरः, शोभनं रूपम् शोभनो वेषः—इत्यादयो गुणाः अपेक्षिता भवन्ति। चरितकथनान्तरं कीर्तनकारः पुनरपि मूलपद्यं गायति। एतेन मूलपद्यगायनेन कथा पूर्णतां याति–इति सूच्यते। कीर्तनकारः, तस्य सहायकाः श्रोतारश्च आराध्यं प्रणमन्ति। तदनन्तरम् आरात्रिकगानपूर्वकं आराध्यस्य आराधकस्य च नीराजनं क्रियते। श्रोतारो जनाः कीर्तनकारं प्रदक्षिणीकुर्वन्तः प्रणमन्तश्च प्रसादं गृहीत्वा स्वस्वस्थानं प्रयान्ति।

अस्या नारदीयहरिकीर्तनपद्धतेरियं विशेषता वर्तते यत् अस्यां कीर्तनकारः मध्ये एकवारमपि न उपविशति, अपि तु निरन्तरं स्थितः अग्रे-पृष्ठे चलन् वा कीर्तनस्य सर्वाणि अङ्गानि पूरयति। सः मध्ये कण्ठशोधनार्थं ताम्बूलादि किमपि वस्तु न भक्षयति। इत्थमियं पद्धतिः अनुपमा अद्वितीया च।

महाराजशिववीरस्य आचार्यः स्वामी समर्थरामदासः स्वीये दासबोधनामके ग्रन्थे हरिकीर्तनस्य कांश्चन नियमान् प्रतिपादितवान्। ते नियमाः कीर्तनकारेण स्वहितार्थम् अवश्यमेव पालनीयाः। महाराष्ट्रप्रदेशे एकनाथमहाराजः, ज्ञानेश्वरमहाराजः, नामदेव महाराजः, तुकाराममहाराजः—एते अन्ये च हरिभक्ताः 'विठ्ठल–विठ्ठल' इति नाम कीर्तयन्तः कीर्तनं कथाञ्च कुर्वन्तः स्वीयं जीवनं कृतार्थं कृतवन्तः, परवर्तिनां मानवानां हिताय ग्रन्थान् च विरचितवन्तः।

इमां नारदीयहरिकीर्तनपद्धतिमाश्रित्य कीर्तनं कुर्वन्तो बहवो धन्याः कीर्तनकाराः समये-समये भारतराष्ट्रं विभूषयामासुः, विभूषयन्ति विभूषयिष्यन्ति च। तेषु सूरतनगरे ताम्बेमहाराजाः, ग्वालियरनगरे ढोलीबुवामहाराजाः सुप्रसिद्धा अभूवन्। इदानीमपि ग्वालियरनगरे, पुण्यपत्तने मोहमय्यां च बहवः कीर्तनकाराः सन्ति।

अस्माकं वाराणसीनगर्याः इदं वैशिष्ट्यं वर्तते यत् सर्वासु विद्यासु कलासु च पारङ्गताः विद्वांसः कलाकाराश्च इमां नगरीमाश्रितवन्तः। नारदीयहरिकीर्तनपद्धतेरपि इयमेव स्थितिः। अस्याः पद्धतेः समारम्भः वाराणस्यां तारकाश्रमस्वामिचरणैः कृतः। एतेषां प्रथमाश्रमनाम 'गोविन्दबोवा' आसीत्। एते मूलरूपेण नासिकक्षेत्रस्था आसन्। एते ग्वालियरमहाराजेन सह काशीमागताः। काशीमहिम्ना आकृष्टास्ते अत्रैव न्यवसन् तथा जीवनस्य अन्तिमक्षणपर्यन्तमस्या हरिकीर्तनपद्धतेः प्रचारमकुर्वन्। एतेषां शिष्यपरम्परायाम् अन्याबाबोवादशपुत्रमहाराजाः, काशीनाथबोवामसूरकरमहाराजाः रामचन्द्रबोवा चान्दवडकरमहाराजाश्च प्रधाना आसन्। चान्दवडकरमहाराजानां शिष्येषु

विष्णुबोवाकालविण्टमहाराजाः, विनायकबोवाभागवतमहाराजाः गङ्गाधरबोवाचान्दवडकरमहाराजाश्च प्रधानाः प्रसिद्धाश्च आसन्। कालविण्टबोवामहोदयानामन्यतमः पुत्रः इदानीमपि अयोध्यायां निवसन् हरिकीर्तनं करोति। विनायकबोवाभागवतमहाराजानां यशस्विनी शिष्यपरम्परा वर्तते। तस्यां परम्परायां यशःशरीराः नारायणशास्त्रिकेलकरमहाराजाः, सखारामबुवामहाराजाः, नारायणरावकालेकरमहाराजाः, रामचन्द्रशास्त्रिवझेमहाराजाः, कविमण्डनमहाराजाः, मारुतिनिम्बग्रामकरमहाराजाः, दादासाहेबदेवरसमहाराजप्रभृतयः प्रसिद्धा आसन्।

भागवतमहाराजानां वर्तमानायां शिष्यप्रशिष्यपरम्परायां डॉ० नीलकण्ठपुरुषोत्तमजोशी, विजयकृष्णभागवत, पुण्डलीककृष्णभागतप्रभृतयः अद्यापि नारदीयहरिकीर्तनपद्धत्या कीर्तनं कुर्वन्तः विराजन्ते।

इत्थम् एतावत्कालपर्यन्तं प्रस्तुतेन विवरणेन सुस्पष्टं भवति यद् इयं नारदीयहरिकीर्तनपद्धतिः जनानाम् ऐहलौकिकीं पारलौकिकीञ्च उन्नतिं कर्तुं सर्वथा समर्था वर्तते। यदि वयम् अस्माकं भारतराष्ट्रं प्राचीने गौरवपूर्णे स्थाने पुनरपि स्थापयितुं वाञ्छामः, तर्हि अस्माभिः सर्वैरपि इयं नारदीयहरिकीर्तनपद्धतिः पुनः संवर्धनीया।

—:०:—

# योजकस्तत्र दुर्लभः

यथा व्यवहारे सत्यामपि कस्यापि कार्यस्य कारणसामग्र्यां सुलभायां योजकस्य अभावे सा सामग्री कार्यमुत्पादयितुमक्षमा भवति, तथैव अस्य समग्रस्य जगत्प्रपञ्चस्य मायाप्रकृत्यादिरूपायाः कारणसामग्र्याः सत्तायामपि योजकस्य साङ्ख्यसम्मतस्य पुरुषस्य वेदान्तिसम्मतस्य परब्रह्मणः अथवा नैयायिकसम्मतस्य ईश्वरस्य सत्तां विना जगत्प्रपञ्चस्य प्रारम्भः निर्मितिर्वा न भवितुमर्हति।

'योजयतीति योजकः' इत्यर्थे युज् धातोः ण्वुल्प्रत्यये कृते 'योजक' शब्दो निष्पद्यते। अस्य विस्तृतः अर्थो भवति यत् यः तत्र-तत्र कार्यनिर्माणसामग्रीं गृहीत्वा तां तथा योजयति यथा कार्यमुत्पद्येत सः योजकः। सामग्री सुलभा भवति, किन्तु योजकः दुर्लभः भवति। सर्वेऽपि जानन्ति यत् यदा भगवान् श्रीरामचन्द्रः जानक्या लक्ष्मणेन च सह अयोध्यातो वनाय निर्गतः तदा मध्ये यमुनां तर्तुं श्रीरामलक्ष्मणौ अविकलौ सन्तौ काष्ठादिभिः प्लवं निर्मितवन्तौ।

तदुक्तं महामुनिना वाल्मीकिना—

**तौ काष्ठसङ्घाटमथो चक्रतुः सुमहाप्लवम् ।**
**शुष्कैर्वंशैः समाकीर्णमुशीरैश्च समावृतम् ॥**

( वा. अयो. स. ५५ श्लो. १४ )

अग्रेऽपि यदा समुद्रतरणस्य अवसर आगतः तदा सेतुयोजकः को भवेत्, इति विचारे जाते नलनामकः सेनापतिः योजकः जातः, इतरैः सर्वैर्वीरैः सेतुनिर्माणसामग्री आनीता, प्राप्ततरणवरेण नलेन सेतुः कृतः, सर्वे लङ्कां गताः, अन्ते श्रीरामो विजयी बभूव ।

महाभारतेऽपि अनेके एतादृशाः प्रसङ्गाः आयान्ति यत् तेषु सामग्री सुलभा आसीत्, किन्तु योजको दुर्लभ आसीत् । उदाहरणार्थमरण्यपर्वणि दुर्वाससः भोजनार्थं सूर्यदत्ता रिक्ता स्थाली द्रौपद्याः सविधे आसीत्, किन्तु तत्प्रयोजकः दुर्लभ आसीत् । भगवान् द्वारकाधीशः सहसा तत्र आगत्य शाकपत्रं तत्र प्रदर्श्य ततः भोजनं प्राकटयत् ।

अग्रे यदा कौरवपाण्डवपक्षयोः सेने युद्धार्थमुपस्थिते, तदा अर्जुनः 'न योत्स्ये' इति कथयित्वा युद्धाद् विरतो बभूव, तदा योजकः दुर्लभ आसीत्, परन्तु पार्थसारथिः तस्य दुर्लभत्वं दूरीचकार; श्रीमद्भगवद्गीताया उपदेशं दत्त्वा अर्जुनं युद्धे प्रेरयामास, पाण्डवाश्च विजयश्रियं प्राप्तवन्तः । अग्रेऽपि यदा उत्तराया गर्भस्य रक्षार्थं योजकः दुर्लभः आसीत्, तदा भगवान् श्रीकृष्णः योजनां कृत्वा तस्या उदरे प्रवेशं कृत्वा गर्भस्य रक्षामकरोत् । अनन्तरं स एव गर्भः महाराजः परीक्षित् अभवत् । इतिहासे पुराणेषु च एतादृशा बहवः प्रसङ्गाः सन्ति येषु योजकः दुर्लभ आसीत्, परन्तु परमेशकृपया सोऽपि सुलभो जातः ।

अस्यां विंशतितमायां शताब्द्यामपि भारतस्य स्वातन्त्र्यप्राप्त्यर्थमपेक्षिता सर्वा सामग्री सन्नद्धा आसीत्, परन्तु योजकस्तत्र दुर्लभ आसीत् । महात्मा गान्धी तां दुर्लभतां दूरामकरोत् । स्वयं देशभक्तनेतृत्वंविधाय भारतं स्वतन्त्रमकरोत् । इयं घटना सर्वैरपि देशवासिभिर्ज्ञाता अस्ति, इत्यस्मिन् विषये किं वक्तव्यम् ? लौकिकदृष्ट्या शास्त्रीयदृष्ट्या च इदमेव सिद्ध्यति यत् योजकस्तत्र दुर्लभः । अत एव नैयायिका अपि—

**कार्यायोजनधृत्यादेः**
**पदात् प्रत्ययतः श्रुतेः ।**
**वाक्यात् सङ्ख्याविशेषाच्च**
**साध्यो विश्वविदव्ययः ॥**

इति ईश्वरसाधकयुक्तिषु आयोजनकारकत्वेन हेतुना ईश्वरं साधयन्ति। इदमुचितमेवास्ति, यतो निष्क्रियेषु परमाणुषु क्रियायाः संयोगस्य च कर्ता कश्चन स्वीकार्यः, यः दुर्लभोऽपि सन् प्राणिनां कर्मभोगार्थं सुलभः सन् परमाणुषु संयोगं विधाय द्व्यणुकादिरचनाद्वारा सृष्टिं विस्तारयति।

एवमेव साङ्ख्यदार्शनिका अपि जडायां प्रकृतौ दुर्लभेनापि योजकेन पुरुषेण संयोगे जाते सति चेतनां स्वीकुर्वन्ति, प्रकृतितः अन्येषां तत्त्वानामुत्पत्तिञ्च प्रतिपादयन्ति।

इत्थमेतावत्पर्यन्तं प्रस्तुतैः प्रमाणैः युक्तिभिश्च इदमेव सिद्ध्यति यत्—

सामग्री सुलभा लोके
तथाऽस्ति सुलभं फलम्।
योजनाऽप्यस्ति सुलभा
योजकस्तत्र दुर्लभः॥

—:-०-:—

## मन एव मनुष्याणां कारणं बन्धमोक्षयोः

संसारे वर्तमानेषु मनुष्यस्य सहायकेषु तत्त्वेषु मनः मनुष्यस्य महत् सहायकं तत्त्वं वर्तते। यथा स्वजनः मनुष्यस्य सहायतां कृत्वा तं सर्वाभ्य आपद्भ्यः समुद्धारयति, तं दुर्व्यसनेषु योजयित्वा, तस्मै दुर्मतिं दत्वा आपत्सु निमज्जयति च, तथैव मनः अपि मनुष्यं समुद्धारयति निमज्जयति च। मन एव मनुष्यस्य बन्धस्यापि कारणं वर्तते, मोक्षस्यापि कारणं वर्तते। मननार्थकात् 'मनु' धातोः असुन् प्रत्यये कृते—'मनस्' शब्दो निष्पद्यते। 'मन्यते अनेन' इत्यस्ति 'मनस्' शब्दस्य अर्थः।

इदं मनः अतीव चञ्चलं दुर्ग्राह्यञ्च वर्तते इत्यस्ति सर्वेषां भोगिनां योगिनाञ्च अनुभवः। यदा अमुमेव अनुभवं मनसि निधाय परमवीरः अर्जुनः भगवन्तं श्रीकृष्णं कथयति—

चञ्चलं हि मनः कृष्ण! प्रमाथि बलवद् दृढम्।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्॥

(श्रीमद्भगव० अ. ६ श्लो. ३४)

तदा भगवान् श्रीकृष्णः अर्जुनं सान्त्वयन् कथयति—

'अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते'।

( श्रीमद्भगव० अ. ६ श्लो. ३५ )

श्रीमद्भागवते एकादशस्कन्धस्य त्रयोविंशतितमेऽध्याये एकस्य कदर्यब्राह्मणस्य कथा वैराग्याभ्यासयुक्तेन तेन गीतानि पद्यानि च वर्तन्ते तान्येव पद्यानि 'भिक्षुगीता' नाम्ना व्यवह्रियन्ते। तत्रत्यमेकं पद्यं दिग्दर्शनरूपेण प्रस्तूयते—

नायं जनो मे सुखदुःख हेतु-
र्न देवतात्मा ग्रहकर्मकालाः।
मनः परं कारणमामनन्ति
संसारचक्रं परिवर्तयेद् यत्॥

( श्रीमद्भाग. स्कं. ११ अ. २३ श्लो. ४३ )

श्रीमन्मार्कण्डेयपुराणान्तर्गते देवीमाहात्म्ये ( दुर्गासप्तशत्यां ) कथा वर्तते यत् स्वजनैर्निराकृतः समाधिनामको वैश्यः राजानं सुरथं स्वीयां मनःस्थितिं कथयति यत् बन्धुभिर्निराकृतोऽपि सः स्वीये मनसि तानेव चिन्तयति, तस्य मनः तानेव प्रति धावति—

किं करोमि न बध्नाति मम निष्ठुरतां मनः
यैः सन्त्यज्य पितृस्नेहं धनलुब्धैर्निराकृतः।
पतिस्वजनहार्दं च हार्दि तेष्वेव मे मनः
किमेतन्नाभिजानामि जानन्नपि महामते।
यत्प्रेमप्रवणं चित्तं विगुणेष्वपि बन्धुषु॥

( दुर्गा० अ. १ श्लो. ३१-३२ )

अस्याः कथाया इदं तात्पर्यं वर्तते यत् मनुष्याणां मनः बन्धु-धनादिषु आसक्तं सत् मनुष्यान् मोहबन्धने पातयति, तदेव मनः जगत्सञ्चालिकाया आदिशक्तेश्चरणयोर्योजितं सत् मनुष्यान् बन्धनात् मोचयति च।

अत एव अद्यावधि जातैः तैस्तैर्महात्मभिः मन एव बोधितम्। समर्थगुरुरामदासस्वामी कथयति—

'मना सज्जना भक्तिपन्थेसि जावे'।

गोस्वामी तुलसीदासः कथयति—

**दीपसिखासम युवति तन मन जनि होसि पतंग ।**

**भजहि राम तजि काम मद करहि सदा सतसंग ॥**

( रामचरित अरण्य. दो० ४६ )

प्रायः सर्वेऽपि शास्त्रकारा मनसः महिमानं स्वीकुर्वन्ति । नैयायिकाः 'मनः' द्रव्येषु अन्यतमं द्रव्यं मन्यन्ते । ते प्रत्यक्षज्ञानार्थम् आत्ममनःसंयोगमनिवार्यं स्वीकुर्वन्ति ।

साङ्ख्यदार्शनिकाः मनः अन्तःकरणम् इन्द्रियञ्च स्वीकुर्वन्ति । योगिनः समाधौ मनसः एव प्राधान्यं स्वीकुर्वन्ति । योगसूत्रं कथयति—

**योगश्चित्तवृत्तिनिरोधः** ( यो. सू. पा. १ सू. २ )

श्रीमद्भागवतेऽप्युक्तम्—**'परो हि योगो मनसः समाधिः'** इति ।

( श्रीमद्भा. स्कं. ११ अ. २३ श्लो. ४६ )

मीमांसकाः कर्मकाण्डिनश्च मनसोऽवधानं कर्मसाकल्यार्थं कर्मसाफल्यार्थञ्च आवश्यकं मन्यन्ते ।

वेदान्तिनस्तु अन्तःकरणचतुष्टयं स्वीकुर्वन्ति । तेषामपि मते सङ्कल्पविकल्पात्मकवृत्ति मनः आत्मज्ञानार्थं निर्मलरूपमपेक्षितं भवति । विहितकर्मानुष्ठानेन मनसि ( चित्ते ) निर्मले जाते सति साधकः आत्मज्ञानाधिकारी भवति । आत्मसाक्षात्कारार्थमपेक्षितानि श्रवणमनननिदिध्यासनानि मनोयोगेनैव साधनीयानि भवन्ति ।

कठोपनिषदि आत्मरथिरूपकप्रतिपादके मन्त्रे कथितमस्ति—

**आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।**

**बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥'**

( कठोप. अ. १ व ३ मं. ३ )

अस्य इदं तात्पर्यमस्ति यत् यदि इन्द्रियाश्वाः नियन्त्रणीयाः स्युः, तर्हि साधकः मनःप्रगृहं नियन्त्रितं कुर्यात् । मनसि निगृहीते इन्द्रियाणि निगृहीतानि भवन्ति तथा भवबन्धः शिथिलः भवति, साधकः मोक्षभागी च भवति ।

इत्थम् एतावत्पर्यन्तं प्रस्तुतैः प्रमाणैः युक्तिभिश्च इदं सुष्ठु सिद्ध्यति यत्—

**'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' ।**

## रसप्रक्रियाविषये माननीयानां केषाञ्चिद् विदुषां मतानि

रसप्रक्रियाविषये प्राचीनकालादारभ्य एतावत्कालपर्यन्तं तैस्तैः स्वनामधन्यैर्माननीयैर्विद्वद्भिः स्वीयानि मतानि स्वेषु-स्वेषु ग्रन्थेषु टीकासु च उपन्यस्तानि सन्ति।

अत्र तेषामुपस्थापनं यथामति यथावसरञ्च प्रस्तूयते—

हेमचन्द्राचार्याः कथयन्ति—

**'विभावानुभावव्यभिचारिभिरभिव्यक्तः स्थायी भावो रसः'**

( हेमचन्द्राचार्यकृतं काव्यानुशासनम् २, १ )

आचार्यविश्वनाथकविराजाः कथयन्ति—

**विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा।**
**रसतामेति रत्यादिः स्थायिभावः सचेतसाम् ॥**

( साहित्यदर्पणः ३, १ )

श्रीमदभिनवगुप्तपादाः कथयन्ति—

**तेन विभावादिसंयोगाद् रसना यतो निष्पद्यतेऽतस्तथाविधरसनागोचरो लोकोत्तरोऽर्थो रसः इति तात्पर्यं सूत्रस्य (अभिनवभारती पृ० २८६)**

श्रीवत्सलाञ्छनभट्टाचार्याः 'साधारण्येन प्रतीतैः कारणैः ( विभावैः ) रसस्याभिव्यञ्जनां प्रतिपादयन्तः कथयन्ति—

**अपारिमित्यं साधारण्यं, प्रमातृविशेषनिष्ठत्वेनाग्रहे सति गृह्यमाणत्वम् ( अत्र नापेक्षितम् )।**

( काव्यप्रकाशस्य सारबोधिनी टीका उल्ला० ४ )।

दीक्षितभीमसेनाः कथयन्ति—

**ब्रह्मसहोदररसाविर्भावप्रकारप्रदर्शनेन ब्रह्मावबोधोऽपि सति तादृशेऽधिकारिणि सति च तादृशसामग्रीसमवधाने 'तत्त्वमसि' इत्यादिश्रुत्युपनिबद्धवाक्यनिष्ठया सद्गुरूपदिष्टया यत्किञ्चिद्वाक्यनिष्ठया वा व्यञ्जनयैव भवतीति ध्वनितम्।** ( काव्यप्रकाशस्य सुधासागरटीका उल्ला० ४ )

काव्यश्रवणानन्तरं काव्यपठनानन्तरं वा रसानुभूतौ कीदृशी प्रक्रिया भवति, कियन्तश्च क्षणा रसप्रतीत्यर्थमपेक्षिता इत्यस्मिन् विषये न्यायादि—

विविधविद्याविद्योतितानां गोकुलनाथोपाध्यायानां मतमिदानीं तेषामेव भाषायामुपस्थाप्यते—

**चुम्बन्ती शनकैः कान्तं निद्राव्याजमुपागतम् ।**
**ज्ञात्वा नतमुखी बाला हसता तेन चुम्बिता ॥**

इत्यत्र काव्ये प्रथमं तावतां पदानां युगपदनुसन्धानमाकाङ्क्षास्मरणाभिन्नम् । ततो द्वितीये क्षणे तावतां पदार्थानां स्मरणम् । ततो निद्राव्याजोपागताभिन्नकान्तकर्मकस्य शनैश्चुम्बनस्य कर्त्री कान्तव्याजज्ञानानतमुखी बाला हसदभिन्नकर्तृकचुम्बनकर्मेति वाक्यार्थस्तृतीयक्षणे प्रतीयते । तत्र च प्रकरणाद्युपस्थिततयो रामसीतयोरेव कान्तबालापदाभ्यामुपस्थितिः । ततश्चुम्बनेनौत्सुक्यहर्षौ, शनकैरिति शङ्का, निद्रया कैतवम्, ज्ञात्वेति मतिः, मुखनमनेन लज्जा, हासेन हर्षः, चुम्बनेनौत्सुक्यं तुरीयक्षणे स्मर्यते । तदेव काव्यवैचित्र्यम् । तत्सहकृतो वाक्यार्थः पञ्चमे क्षणे । निद्राव्याजोपगतकितवकान्तकर्मकशनैश्चुम्बनकर्त्री शङ्कौत्सुक्यहर्षवती, कैतवज्ञानप्रयोज्यमुखनमनकर्त्री मतिलज्जावती बाला, हसदभिन्नेन हर्षवतोत्सुकेन कान्तेन चुम्बितेति व्यञ्जनाभिधाव्यतिकरेण वाक्यार्थानुभवमुल्लासयति । सैव बुद्धिः काव्यारूढत्वम्, यद् व्यञ्जनोपनीतव्यभिचारिभावैः सह विभावानुभावयोरनुभवः ।

एवं नटस्याहार्यभूमिकाया रामो मुख्योऽर्थः । तथैव द्वितीयनटभूमिकायाः सीताऽनुकरणचेष्टया वस्तुतो रत्यनुत्थितयाऽनुकार्यस्य तात्त्विकी चेष्टाऽभिधीयते । तया च व्यभिचारिभावा व्यज्यन्त इति व्यञ्जनोपस्थितव्यभिचारिभावोपरक्तयोर्विभावानुभावयोरभिनयस्य मुख्यया वृत्त्याऽनुभावनमेव नाट्यारूढत्वमवसेयम् ।

अत्र काव्यारोहात्मके वाक्यार्थानुभवे रामत्वसीतात्वाभ्यां विभावौ तद्वदनयोः संयोगत्वेन चुम्बनम्, रामेण सह सपदि सङ्गच्छेयेत्याकारेणौत्सुक्यम् मा स्म जागरीद् राम इति शङ्का, कितवो रामो मद्भावमज्ञासीदिति मतिः असमञ्जसं रामेण मद्भावपरिज्ञानमिति लज्जा प्रसभमनया विदितभावया सङ्गच्छेयेत्यौत्सुक्यं च विशेषाकारेणावगम्यते । तथैव नाट्यारोहेऽपि । अत्र च वैयञ्जनिकवाक्यार्थबोधे वाक्यार्थ इव वाक्यमपि भासत एव आलोकघटयोरिव व्यङ्ग्यव्यञ्जकयोर्वाक्यतदर्थयोरेकबुद्ध्यनुप्रवेशध्रौव्यात् ।

अत एवैतदनन्तरे षष्ठे क्षणे शब्दार्थालङ्कारचमत्काराः स्वदन्ते, मूर्ध्नि वर्गान्त्यगस्पर्शादिवर्णैश्चित्ते द्रवीभावश्च जन्यते । यतो द्रुतेन चेतसा रत्यादेराह्लादकत्वं नाम गुणो विषयीकरिष्यते । त एते शब्दार्थचमत्काराः काव्य-

श्रवणादनन्तरे षष्ठे क्षणे भुज्यन्ते। तत्रैव च क्षणे पूर्वोत्पन्नकाव्याद्यारोहस्वरूप-साधारणीकरणव्यापारसहकृतेन शब्दार्थालङ्कारचमत्कारावास्वादयता द्रवता च चित्तेन साधारणीकृता विभावानुभावव्यभिचारिणः प्रतिसन्धीयन्ते।

यदि च काव्यारोहजनितश्चित्तचमत्कार एव चित्तस्य व्यापारः, तदा काव्यानुसन्धानादनन्तरे सप्तमे क्षणे साधारणतया प्रतिसन्धीयन्ते विभावादयः। तथा हि—रामसीतादयस्तावदास्वादाङ्कुरकवलितगुणान्तरप्रसरणनिरुद्धास्वाद-विरुद्धधर्माध्यासादन्तर्मुखीभवता समुद्रिक्तसत्त्वेन चित्तेन रामत्वसीतात्वादि-परिच्छिन्नधर्मपरिहारेण जुगुप्साद्यभिव्यञ्जन—( स्त्रीपुंसव्यञ्जन )—घटित-नायकत्वादितिरोभावेन काव्यारोहविषयव्यभिचार्यादिशक्तिसमुत्थध्वननमार्गा-ध्वनीनगुणविशेषवैशिष्ट्यपरिपुष्टास्वादमर्मसन्धयः प्रतिसन्धीयन्ते। 'चुम्बन्ती शनकैः कान्तम्' इत्यादौ पराभिप्रायप्रकटनपाटवधृतिनिह्नुतौत्सुक्यसमुचितानु-रागित्वसाहसपरिहासादयो नायकस्याभीष्टेऽपि वस्तुन्यभिप्रायनिह्नवस्वरूपं वाम्यमौत्सुक्यसत्प्रतिपक्षितव्रीडत्वलक्षणो हावो लज्जाऽतिशयप्रयोजितं चाभि-जात्यमित्यादयो नायिकाया गुणास्तत्र प्रतिसन्धाने प्रकारीभवन्ति न तु नायकत्वादयः।

चुम्बनमुखनमनद्वितीयचुम्बनादयोऽनुभावास्तु रागेङ्गितत्व-कुट्टमितत्व-प्रगल्भत्वत्वादिना, शङ्कौत्सुक्यादयश्च विषयविशेषपरिहारेण स्मर्यन्ते। तथा ह्यौत्सुक्यस्यानेन पुंसाऽनया स्त्रिया वा सहाधुना मिथुनीभवेयमित्याकारः। तत्र चेदन्तवस्त्रीत्व-पुंस्त्वादेः परिच्छिन्नतयाऽश्लीलत्वेन, अत एव मिथुनीभवनस्यापि त्यागेन साक्षाच्चिकीर्षात्वेन केवलमवभास इति शङ्कापि, जागरणनिषयकत्वा-दिपरिहारेणानभीष्टसंशयत्वेनैव भासत इत्याद्यूह्यमित्यप्रायकः **साधारण्येन प्रतीतैरित्यन्तो** ग्रन्थः।

तत्रापि प्रियो द्वेष्य उदासीन इति त्रिविध एव क्षेत्रज्ञः। तेषां च न सम्बन्धो न च सम्बन्धायोगो नतमां सम्बन्धायोगव्यवच्छेदो न चान्यसम्बन्धव्यवच्छेदो न चाप्यसाधारणधर्मो विभावादौ भासत इति **ममैवैत** इत्यादिना प्रपञ्चितम्।

**साधारण्येन प्रतीतैरि**त्यनेनाष्टमे सप्तमे वा क्षणे वाम्याभिजात्यहाववती प्रगल्भं कितवं चालम्ब्य लज्जितोत्सुका कुट्टमितवती चेत्येकः, वाम्यहावादि-मतीमालम्ब्योत्सुको हृष्टश्च प्रगल्भ इत्यपरः काव्यार्थो यौगपद्येन स्वदते। स एव भावास्वाद इति सूचितं भवति।

**अभिव्यक्त** इति काव्यास्वादाद् द्वितीये काव्यानुसन्धानादष्टमे नवमे वा क्षणे रत्योः स्मरणम्, ततो नवमे दशमे वा क्षणे पराभिप्रायप्रकटनादिगुणवदा-लम्बिता लज्जौत्सुक्यसहकारेण कुट्टमितमनुभावयन्ती हाववाम्याभिजात्यसम्पन्न-

जनसमवेता रतिरिति, तं च वाक्यादिगुणवन्तं जनमालम्बिता हर्षौत्सुक्याभ्यां प्रागल्भ्यमनुभावयन्ती पराभिप्रायप्रकटककितवसमवेता रतिरिति च युगपदास्वाद्यते। स एव स्थायिभावास्वादः। यदाह धनिकः—

**अप्रयुक्ता प्रयुक्ता वा बुद्ध्यवस्था यथा क्रिया।**
**वाक्यार्थः कारकैर्युक्ता स्थायीभावस्तथेतरैः॥** इति।

ततो दशम एकादशे वा क्षणे शब्दार्थचमत्कारभावास्वादगोचरानर्थानुपादाय तथाविधविभावानुभावव्यभिचारिभावसम्पन्ने परस्पररतिमदालम्बिते रती इति चर्वणा। स एव पानकरसन्यायेनालौकिकरसास्वादः।

स चास्वादकप्रकर्षबलादधिकाधिककालं यथानुभवमवतिष्ठमानो निखिलैरेवालङ्कारचमत्कारास्वादादिभिः सह विरमति। सङ्ख्याजनकापेक्षाबुद्धीनां प्रयोजनानुरोधेन त्रिक्षणावस्थायित्वमिव काव्यप्रयोज्यास्वादपरम्पराणामधिकाधिककालव्यापकत्वमविरुद्धमिति दिक्। (का० प्र० विवरणम्, उल्ला० ४)।

दृश्यकाव्यतः जायमानायाः चर्वणायाः कृते अपेक्षितानां क्षणानां न्यूनाधिकसङ्ख्या सहृदयैः स्वयमेव ऊह्या।

प्रदीपकाराः गोविन्दाचार्याः कथयन्ति—शृङ्गारिणामेव शृङ्गारस्य, निर्विण्णस्वभावानामेव शान्तस्याभिव्यक्तिरित्याद्यनुभूयते किञ्चापरापि स्वाभाविकी वासना सहकारिणी, यां विना शृङ्गारिणामपि मीमांसकवैयाकरणादीनां न रसाभिव्यक्तिः। [ काव्य प्र० उल्ला० ४ ]

उद्योतकाराः नागेशभट्टमहोदयाः कथयन्ति—अत्रेदं तत्त्वम्-शक्त्यादिजन्यबोधे प्रथमं विशिष्य प्रतीतावप्यनन्तरं व्यञ्जनया प्रागुक्तसाधारण्येनोपस्थितौ सामाजिकानां स्वस्वनिष्ठरत्यादेरेव चर्वणा। एवञ्च काव्यादौ यावदयं रामः, इयं सीतेत्यादिबुद्धिस्तावन्न चमत्कार इत्यत्र सहृदयानुभव एव प्रमाणम्। अत एव काव्यश्रवणादिदशायां स्वपरविभागानुभवो न जायत इति सहृदयसम्मतम्। [ काव्य प्र० उल्ला० ४ ]

इत्थमेतावत्पर्यन्तं कृतेन विचारेण विवरणेन च उपरि निर्दिष्टानां विदुषां रसप्रक्रियाविषयकं मतं सुस्पष्टं भवति।

—****—

# परिशिष्टम्

## साहित्यशास्त्रम्

**रससूत्रम्—विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः**

| विभावः + अनुभावः + व्यभिचारिभावः |

= रसः

सम्प्रदायाः

| रससम्प्रदायः | अलङ्कारसम्प्रदायः | रीतिसम्प्रदायः | वक्रोक्तिसम्प्रदायः | ध्वनिसम्प्रदायः | औचित्यसम्प्रदायः |
|---|---|---|---|---|---|
| ( प्रवर्तकः—भरतः ) | ( प्र०—भामहः ) | ( प्र०—वामनः ) | ( प्र०—कुन्तकः ) | (प्र०—आनन्दवर्धनः) | ( प्र०—क्षेमेन्द्रः ) |


गुणाः
( प्राचीनमते )
१० शब्दगुणाः
१० अर्थगुणाः
गुणाः
( नवीनमते )
प्रसादः
ओजः
माधुर्यम्
दोषाः
पदगताः
पदांशगताः
वाक्यगताः
अर्थगताः
रसगताः
अलङ्काराः
शब्दालङ्काराः
अर्थालङ्काराः
उभयालङ्काराः

# जैन दर्शनम्

**अर्हतः स्वरूपम्—सर्वतो जितरागादिदोषस्त्रैलोक्यपूजितः ।**
**यथास्थितार्थवादी च देवोऽर्हत्परमेश्वरः ॥**

रत्नत्रयम्

- सम्यग् दर्शनम्
  - [ येन रूपेण जीवाद्यर्थो व्यवस्थितस्तेन रूपेण अर्हता प्रतिपादिते तत्त्वार्थे विपरीताभिनिवेशरहितत्वाद्यपर-पर्यायं श्रद्धानम् ]
  - सम्यग्दर्शन हेतुः
    - निसर्गः
    - गुरुदत्ताधिगमः
- सम्यग् ज्ञानम्
  - [ येन स्वभावेन जीवादयः पदार्था व्यवस्थितास्तेन स्वभावेन मोह-संशयरहितत्वेन अवगमः ]
    - मतिः
    - श्रुतम्
    - अवधिः
    - मनःपर्यायः
    - केवलम्
- सम्यक् चारित्रम्
  - [ संसरणकर्मोच्छित्तौ उद्यतस्य श्रद्दधानस्य ज्ञानवतः पापगमनकारणक्रियानिवृत्तिः ]
    - अहिंसा
    - सूनृतम्
    - अस्तेयम्
    - ब्रह्मचर्यम्
    - अपरिग्रहः

**भावनापञ्चकम्**

हास्यप्रत्याख्यानम् | लोभप्रत्याख्यानम् | भयप्रत्याख्यानम् | क्रोधप्रत्याख्यानम् | भाषणप्रत्याख्यानम्

तदुक्तम्—

**हास्यलोभभयक्रोधप्रत्याख्यानैर्निरन्तरम् ।**
**आलोच्य भाषणेनापि भावयेत् सूनृतं व्रतम् ॥**

अन्याः अपि भावनाः एताः सन्ति—

अहिंसाभावनाः, (५) सूनृतभावनाः, (५) अस्तेयभावनाः (५)
ब्रह्मचर्यभावनाः, (५) अपरिग्रहभावनाः (५)

# केषाञ्चिन्मतेन

## जैनदर्शनसम्मतानि सप्त तत्त्वानि




केषाञ्चिन्मतेन पुण्यमपुण्यञ्चेति मिलित्वा **नव तत्त्वानि**

बन्धः

| प्रकृतिबन्धः ( अष्टविधः ) | स्थितिबन्धः | अनुभवबन्धः ( अनुभावबन्धः ) | प्रदेशबन्धः |
|---|---|---|---|

१—ज्ञानावरणात्मकः—५ विधः
२—दर्शनावरणात्मकः—९ विधः
३—अन्तरायात्मकः—५ विधः
४—वेदनीयात्मकः—२ विधः
५ —मोहनीयात्मकः—२८ विधः
६—आयुरात्मकः—४ विधः
७—नामात्मकः—४२ विधः
८—गोत्रात्मकः—२ विधः

स्वरूपसम्बोधननामके ग्रन्थे आत्मनः स्वरूपमुक्तम्—

**ज्ञानाद् भिन्नो न नाभिन्नो**
**भिन्नाभिन्नः कथञ्चन ।**
**ज्ञानं पूर्वापरीभूतं**
**सोऽयमात्मेति कीर्तितः ॥**

**आस्रवः**—औदारिकादिकायादिचलनद्वारेण आत्मनश्चलनं योगपदवेदनीयम् आस्रवः। यथा—सलिलावगाहि द्वारं जलाद्यास्रवणकारणत्वादास्रव इति निगद्यते, तथा योगप्रणाडिकया कर्म आस्रवति स योगः आस्रवः। यथा— निष्टप्ताय:पिण्डः जले क्षिप्तः समन्तादम्भः गृह्णाति, तथा कषायोष्णः जीवः योगानीतं कर्म समन्तादादत्ते। कषति = हिनस्ति आत्मानं कुगतिप्रापणादिति कषायः—क्रोधः, मानः, लोभश्च।

अपरे त्वेवं मन्यन्ते—आस्रावयति पुरुषं विषयेषु इति आस्रवः = इन्द्रियप्रवृत्तिः। पौरुषं ज्योतिः इन्द्रियद्वारा विषयान् स्पृशत् सत् रूपादिज्ञानरूपेण परिणमते।

**बन्धः**—आत्मा मिथ्यादर्शनाविरतिप्रमादकषायवशाद् योगापरपर्यायास्रववशाच्च सूक्ष्मैकक्षेत्रावगाहिनामनन्तप्रदेशानां कर्मबन्धयोग्यानां पुद्गलानामादानमुपश्लेषणं यत् करोति सः बन्धः।

**संवरः**—आस्रवनिरोधः = संवरः । स्रोतसः द्वारं संवृणोति इति संवरः ।

**निर्जरा**—अर्जितस्य कर्मणः तपःप्रभृतिभिः साधनैर्निर्जरणम् ।

**मोक्षः**—आत्यन्तिककर्ममोक्षणम् = मोक्षः = ऊर्ध्वगमनम् = आलोकान्तगमनम् । बन्धसङ्गरहितः आत्मा ऊर्ध्वं गच्छति ।

अन्ये तु—गतसमस्तक्लेशतद्वासनस्य अनावरणज्ञानस्य सुखैकतानस्य आत्मनः उपरिदेशावस्थानं मोक्षः ( मुक्तिः )–इति मन्यन्ते ।

# जैनदर्शनसम्मतः सप्तभाङ्गनयः

## ( स्याद्वादः )

१—स्यादस्ति

२—स्यादस्ति च नास्ति च

३—स्यादवक्तव्यः

४—स्यादस्ति च अवक्तव्यः

५—स्यान्नास्ति च अवक्तव्यः

६—स्यान्नास्ति च अवक्तव्यः

७—स्यादस्ति च नास्ति च अवक्तव्यः

'स्यात्' शब्दः तिङन्तप्रतिरूपकः अनेकान्तस्य ( 'कथञ्चिदस्ति' इत्यर्थकस्य ) द्योतकः निपातः।

जैनानां प्रतिवादिनश्चतुर्विधाः

१—सद्वादिनः

२—असद्वादिनः

३—सदसद्वादिनः

४—अनिर्वचनीयवादिनः

जैनाः द्विविधाः

- श्वेताम्बराः
- दिगम्बराः

अष्टादशदोषरहितः देवः जिनः

सम्यक्तत्त्वज्ञानोपदेशकः गुरुः

अष्टादश दोषाः इमे—

| | |
|---|---|
| १—बलान्तरायः | १०—हिंसा |
| २—भोगान्तरायः | ११—रतिः |
| ३—उपयोगान्तरायः | १२—अरतिः |
| ४—दानान्तरायः | १३—रागः |
| ५—लाभान्तरायः | १४—द्वेषः |
| ६—निद्रा | १५—अविरतिः |
| ७—भीः | १६—स्मरः |
| ८—अज्ञानम् | १७—शोकः |
| ९—जुगुप्सा | १८—मिथ्यात्वम् |

# जैनदर्शनसम्मतः पदार्थविभागः




चैतन्यस्य जीवस्वरूपापत्तौ हेतवः भावाः पञ्चविधाः—

१—**औपशमिकः भावः**—अनुदयप्राप्तिरूपे कर्मणः उपशमे सति जीवस्य उत्पद्यमानः, यथा—कलुषितस्य जलस्य कतकादिद्रव्यसम्बन्धात् स्वच्छता उत्पद्यते ।

२—**क्षायिक भावः**—आर्हततत्त्वानुसन्धानवशाद् रागादिपङ्कक्षालनेन जीवस्य निर्मलतापादकः । कर्मणः क्षये सति जायमानत्वादयं भावः क्षायिकः उच्यते । यथा—मलरहितस्य स्फाटिकादिपात्रस्थितस्य जलस्य स्वच्छता ।

३—**उभयात्मा = मिश्रः भावः**—यथा जलस्य अर्धस्वच्छता ।

४—**औदयिकः भावः**—कर्मोदये सति भवन् भावः ।

५—**पारिणामिकः भावः**—कर्मोपशमाद्यनपेक्षः सहजः चेतनत्वादिः भावः पारिणामिकः ।




**टिप्पणी**—कालत्रयसम्बन्धितया अस्तीति व्यवहारः। अनेकप्रदेशवत्त्वेन हेतुना शरीरवत् कायव्यपदेशः।

## जैनदर्शनसम्मतः जीवास्तिकायभेदः




१. पृथिवी = मार्गगतधूलिः
२. पृथिवीकायः = इष्टकादिः
३. पृथिवीकायिकः = येन पृथिवी कायत्वेन गृहीता = वृक्षादिः
४. पृथिवीजीवः = यः पृथिवीं कायत्वेन ग्रहीष्यति = वृक्षादिः

एतेषां धर्मविशेषः


द्रव्याणि षट्
जीवः
गतिः
ज्ञानादि च
आकाशः
अवगाहः
धर्मः
प्रवृत्तिः
अधर्मः
स्थितिः
पुद्गलः
रूपत्वादिः
कालः
वर्तनाहेतुत्वम्

# बौद्धदर्शनम्


बौद्धाः ( चत्वारः )
माध्यमिकाः
[सर्वशून्यत्ववादिनः]
योगाचाराः
[बाह्यार्थशून्यत्ववादिनः]
सौत्रान्तिकाः
[बाह्यार्थानुमेयत्ववादिनः ]
वैभाषिकाः
[बाह्यार्थप्रत्यक्षत्ववादिनः]


चतुर्विधा भावना
सर्वं क्षणिकम्-क्षणिकम्
सर्वं दुःखम्-दुःखम्
सर्वं स्वलक्षणम्-स्वलक्षणम्
सर्वं शून्यम्-शून्यम्

**माध्यमिकनामसार्थक्यम्**--गुरूक्तस्य अङ्गीकरणमुत्तमत्वम्, पर्यनुयोगकरणमधमत्वम्, उभयोर्मध्ये वर्तमानत्वात् माध्यमिक इति नाम एतेषाम् ।

**योगाचारनामसार्थक्यम्**--अज्ञातस्य अर्थस्य ज्ञानाय पर्यनुयोगः = जिज्ञासामूलकः प्रश्नः = योगः । गुरूक्तस्य अर्थस्य प्रतिप्रश्नकुतर्कादिराहित्येन अङ्गीकरणम्=आचारः । योगाचारयोः सम्पादनात् योगाचार इति नाम एतेषाम् ।

**सौत्रान्तिकनामसार्थक्यम्**--सूत्रस्य = संसारपरम्परायाः अन्तं पृच्छतः शिष्यान् गुरुराह--'भवन्तः अन्तं पृष्टवन्तः अतः, सौत्रान्तिका भवन्तु ।' इति हेतोः सौत्रान्तिक इति नाम एतेषाम् ।

**वैभाषिकनामसार्थक्यम्**--बाह्येषु गन्धादिषु आन्तरेषु रूपादिस्कन्धेषु सत्स्वपि, तत्र अनास्थामुत्पादयितुं सर्वं शून्यमिति प्राथमिकान् विनेयानुपदिदेश भगवान् बुद्धः, द्वितीयान् विज्ञानमात्रग्रहाविष्टान् विज्ञानमेव एकं सदिति, तृतीयानुभयं सत्यमिति आस्थितान् विज्ञेयमनुमेयमिति, सेयं विरुद्धा भाषा-इति वर्णयन्तः वैभाषिकाख्यया जाताः । अतः, युक्तमेव वैभाषिक इति नाम एतेषाम् ।

# सर्वबौद्धसम्मतपदार्थविचारः

प्रत्ययः ( ज्ञानं ) चतुर्विधः

- आलम्बनप्रत्ययः [ नीलघटादिः ]
- समनन्तरप्रत्ययः [ प्राचीनज्ञानम् = अव्यवहित-पूर्वक्षणवृत्ति ज्ञानम् ]
- सहकारिप्रत्ययः [ आलोकादिः ]
- अधिपतिप्रत्ययः [चक्षुरादीन्द्रियाणि]

चित्तम्, चैत्तम् = चित्तात्मकज्ञानजन्यं सुखाद्यात्मकं ज्ञानम्

चित्तचैत्तात्मकाः पञ्च स्कन्धाः

- रूपस्कन्धः: 'रूप्यन्ते एभिर्विषया' इति अथवा 'रूप्यन्ते' इति व्युत्पत्त्या सविषयाणि इन्द्रियाणि
- विज्ञानस्कन्धः: आलयविज्ञान-प्रवृत्तिविज्ञान-प्रवाहः
- वेदनास्कन्धः: रूपविज्ञानस्कन्धसम्बन्धजन्यः सुखदुःखादिप्रत्ययप्रवाहः
- संज्ञास्कन्धः: गौरितिशब्दोल्लेखि-प्रवाहः
- संस्कारस्कन्धः: वेदनास्कन्धजन्याः रागद्वेषादयः क्लेशाः मदमानादयः उपक्लेशाः धर्माधर्मौ च




द्वादशायतनानि

| एकमतानुसारम् | अन्यमतानुसारम् |
|---|---|
| ५ ज्ञानेन्द्रियाणि | ५ ज्ञानेन्द्रियाणि |
| ५ कर्मेन्द्रियाणि | ५ शब्दादिविषयाः |
| १ मनः | १ मनः |
| १ बुद्धिः | १ धर्मायतनम् ( बुद्धिः ) |

**मुक्तिः**—रागादिसन्तानवासनोच्छेदः ।

**वासना**—एकसन्तानवर्तिनामालयविज्ञानानां तत्तत्प्रवृत्तिजननशक्तिः ।

**परिपाकः**—वासनायाः स्वकार्योत्पादं प्रति आभिमुख्यम् ।


नव्यन्याय-वैशेषिकसम्मताः पदार्थाः
भावः
अभावः
द्रव्यम् ९
गुण २४
कर्म ५
सामान्यम् २
विशेषः (अनन्ताः)
समवायः १
संसर्गाभावः
अन्योन्याभावः
प्रागभावः
प्रध्वंसाभावः
अत्यन्ताभावः


द्रव्यम् नवविधम्
पृथिवी ( प्रथमम् )
नित्या
अनित्या
शरीरम्
इन्द्रियम्
विषयः
विद्यमानाः गुणाः
स्पर्शसङ्ख्यापरिमाणपृथक्त्व-
संयोगविभागपरत्वापरत्वगुरुत्वनैमित्तिक-
द्रवत्वरूपरसगन्धवेगाख्यसंस्काराः
१४
आपः ( द्वितीयम् )
नित्याः
अनित्याः
शरीरम्
इन्द्रियम्
विषयः
विद्यमानाः गुणाः
स्पर्शादिगुरुत्वान्ताः ९
सांसिद्धिकद्रवत्वाभास्वररूप-
रसस्नेहवेगाख्यसंस्काराः
१४
तेजः ( तृतीयम् )
नित्यम्
अनित्यम्
शरीरम्
इन्द्रियम्
विषयः
विद्यमानाः गुणाः
स्पर्शादयः ८
भास्वररूपनैमित्तिकद्रवत्व-
वेगाख्यसंस्काराः
११
वायुः ( चतुर्थम् )
नित्यः
अनित्यः
शरीरम्
इन्द्रियम्
विषयः
विद्यमानाः गुणाः
स्पर्शादयः ८
वेगाख्यसंस्कारश्च
९

आकाशः ( पञ्चमम् )
नित्यः
विद्यमानाः गुणाः
सङ्ख्यादयः ५
शब्दश्च
६

कालः ( षष्ठम् )
नित्यः
विद्यमानाः गुणाः
सङ्ख्यादयः
५

दिक् ( सप्तमम् )
नित्या
विद्यमानाः गुणाः
सङ्ख्यादयः
५

आत्मा (अष्टमम्)

जीवात्मा
विद्यमानाः गुणाः
सङ्ख्यादयः ५
बुद्धिसुखदुःखेच्छाद्वेष-
प्रयत्नधर्माधर्मभावनाख्य-
संस्काराश्च
१४

परमात्मा
विद्यमानाः गुणाः
सङ्ख्यादयः ५
बुद्धीच्छाप्रयत्नाश्च
८

मनः ( नवमम् )
विद्यमानाः गुणाः
सङ्ख्यादयः ७
वेगाख्यसंस्कारश्च
८

# प्राचीन न्यायाभिमतानां १६ पदार्थानां वैशेषिकाभिमत ७ पदार्थेषु अन्तर्भावः

१—द्रव्ये—प्रत्यक्ष प्रमाणात्मशरीरेन्द्रियमनसाम् ।

२—गुणे—व्याप्तिज्ञानसाध्यज्ञानशब्दार्थबुद्धिप्रवृत्तिदोषप्रेत्यभावफलदुःखसंशयावयवतर्कनिर्णय-वादजल्पवितण्डाछलजातीनाम् । अत्रार्थपदेन रूपादयः पञ्च गुणा ग्राह्याः ।

| | |
|---|---|
| ३—कर्मणि—कर्मणाम् | प्रयोजनस्य द्रव्यादिषु यथायोगमन्तर्भावः । |
| ४—सामान्ये—सामान्यस्य | दृष्टान्तसिद्धान्तयोः द्रव्यादिषु यथायोगमन्तर्भावः । |
| ५—विशेषेषु—विशेषाणाम् | ५ हेत्वाभासानां द्रव्यादिषु यथायोगमन्तर्भावः । |
| ६—समवाये—समवायस्य | २२ निग्रहस्थानानां द्रव्यादिषु यथायोगमन्तर्भावः । |
| ७—अभावे—अपवर्गस्य | |

# पदार्थसाधर्म्यविचारः

| | |
|---|---|
| द्रव्यगुणकर्मसामान्यविशेषसमवायाभावानां सप्तपदार्थानां साधर्म्यम् | —ज्ञेयत्वम्, अभिधेयत्वम्, प्रमेयत्वम्, पदार्थत्वम् |
| द्रव्यादीनां षण्णां पदार्थानां ,, | —भावत्वम् |
| ,, पञ्चानां ,, ,, | —अनेकत्वे सति समवायित्वम्, समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वम् |
| ,, चतुर्णां ,, ,, | —समवेतसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वम् |
| ,, त्रयाणां ,, ,, | —सत्तावत्त्वम्, जातिमत्त्वम् |
| प्रथमयोः द्वयोः पदार्थयोः ,, | —नित्यसमवेतपदार्थविभाजकोपाधिमत्त्वम् |
| पृथिव्यादिनवाद्रव्याणां ,, | —समवायिकारणत्वम्, द्रव्यत्ववत्त्वम्, गुणवत्त्वम् |
| गुणकर्मणोः ,, | —असवायिकारणत्वम् |
| गुणादिषट्पदार्थानां ,, | —निर्गुणत्वम्, निष्क्रियत्वम् |
| कर्मादिपञ्चपदार्थानां ,, | —( गुणवदवृत्तिधर्मवत्त्वम् ) कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वम् |
| सामान्यादिचतुःपदार्थानां ,, | —जातिशून्यत्वम् |
| विशेषादित्रिपदार्थानां ,, | —समवेतसमवेतावृत्तिपदार्थविभाजकोपाधिमत्त्वम् |
| समवायाभावयोः ,, | —समवेतावृत्तिपदार्थविभाजकोपाधिमत्त्वम् |
| अभावानां ,, | —अभावत्वम् |
| नित्यद्रव्यातिरिक्तपदार्थानां ,, | —आश्रितत्वम् |

## प्रत्यक्षज्ञानविचारः

आत्मा मनसा युज्यते, मनः ज्ञानेन्द्रियेण, ज्ञानेन्द्रियम् अर्थेन, ततः प्रत्यक्षम् ॥




**इन्द्रियार्थसन्निकर्षः षट्विधः**

१—संयोगः

२—संयुक्तसमवायः

३—संयुक्तसमवेतसमवायः

४—समवायः

५—समवेतसमवायः

६—विशेष्यविशेषणभावः


अनुमितिकारणविचारः
पक्षता
प्रत्यक्षसामग्र्यभावः
परामर्शः
( प्राचीनमतेन )
साध्यसन्देहः
( नवीनमतेन )
सिषाधयिषाविरह-
विशिष्टसिद्ध्यभावः
अन्वयव्याप्तिघटितः
व्यतिरेकव्याप्तिघटितः
कारणम्
( अतिप्राचीनमतेन )
ज्ञायमानं लिङ्गम्
( प्राचीनमतेन )
व्याप्तिज्ञानम्
( नवीनमतेन )
परामर्शः
हेत्वाभासः [ हेतुवदाभासते = दुष्टो हेतुः, हेतोराभासः = हेतोर्दोषः ]
सव्यभिचारः
( अनेकान्तः )
विरुद्धः
सत्प्रतिपक्षः
( प्रकरणसमः )
असिद्धः
बाधितः
( कालात्ययापदिष्टः )
साधारणः, असाधारणः अनुपसंहारी
( प्राचीनमतेन )
साध्यासामानाधिकरण्यम्
( नवीनमतेन )
साध्यव्यापकीभूता-
भावप्रतियोगित्वम्
आश्रयासिद्धः
स्वरूपासिद्धः
व्याप्यत्वासिद्धः

## शाब्दबोधकारणविचारः



# पूर्वमीमांसादर्शनशास्त्रप्रकाशका विषयाः

**'मीमांसा' शब्दस्य व्युत्पत्तिः—**

पूजार्थकात् 'मान' **धातोः अथवा** मानार्थकात् माङ् धातोः 'मीमांसितुमिच्छति' इत्यस्मिन् अर्थे सति असति च मान्-वधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ( अष्टा. ३।१।६ ) इत्यनेन सूत्रेण सनि प्रत्यये, 'सन्यङोः' इति सूत्रेण द्वित्वे, अभ्यासस्य 'सन्यतः' इत्यनेन सूत्रेण इकारे कृते, दीर्घे कृते 'मीमांन्स' इति जाते 'नश्चापदान्तस्य झलि' इत्यनेन सूत्रेण नकारस्य अनुस्वारे कृते 'सनाद्यन्ता धातवः' इत्यनेन धातुसंज्ञायाम्, 'अप्रत्ययात्' इत्यनेन सूत्रेण स्त्रीत्वविवक्षायां 'अ' प्रत्यये कृते, 'अतो गुणे' इत्यनेन पररूपे, स्त्रीत्वविवक्षायां 'टाप्' प्रत्यये 'मीमांसा' इति शब्दः निष्पन्नो भवति ।



विधिः ( प्रथमं वर्गीकरणम् )

उत्पत्तिविधिः विनियोगविधिः प्रयोगविधिः अधिकारविधिः

विधिः ( द्वितीयं वर्गीकरणम् )

अपूर्वविधिः नियम विधिः परिसङ्ख्याविधिः

**लिङर्थविषये विविधानि मतानि--**

१—विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनारूपाः षट् लिङर्थाः—इति पाणिनीयाः

२—इष्टसाधनत्वं कृतिसाध्यत्वञ्च लिङर्थः—इति वाचस्पतिमिश्राः

३—इष्टसाधनत्वं लिङर्थः—इति प्रथमे मण्डनमिश्राः

४—प्रवर्तनात्वेन रूपेण इष्टसाधनत्वं लिङर्थः—इति पार्थसारथिमिश्राः

५— ,, ,, ,, —इति मीमांसान्यायप्रकाशकाराः

६—'अभिधीयते अनेन' इति व्युत्पत्त्या 'अभिधा' शब्देन विधिशब्द उच्यते। तद्व्यापारात्मिका भावना लिङादिवाच्या—इति न्यायसुधाकारा भट्टसोमेश्वरमहोदयाः

**जैमिनीय सूत्र परिचयः--**

अध्यायाः—१२ + ४

१२ अध्यायानाम् एकेन मतेन सू. सं. २२४४

अन्य मतेन— ,, ,, २७४५

द्वादशाध्याय्याः तृतीये षष्ठे दशमे च अध्याये अष्टौ अष्टौ पादाः, अन्येषु अध्यायेषु प्रत्येकं चत्वारः पादाः। एवं मिलित्वा २४ + ३६ = पादाः। प्रत्येकं पादे विविधानि अधिकरणानि सन्ति। सर्वाणि अधिकरणानि मिलित्वा ६०७ सन्ति। अधिकरणस्यैव नामान्तरं 'न्याय' इति वर्तते।

**विषयो विषयश्चैव पूर्वपक्षस्तथोत्तरम्।**
**प्रयोजनञ्च पञ्चैते शास्त्रेऽधिकरणं विदुः॥**

॥ श्रीः ॥

## द्वादशाध्यायानां विषयाः




१. विध्यर्थवादादिरूपप्रमाणनिरूपणम् ।

२. यागदानादिकर्मभेदः ।

३. प्रयाजादीनां दर्शपूर्णमासाद्यर्थत्वेन तच्छेषत्वम् ।

४. गोदोहनस्य पुरुषार्थत्वप्रयुक्त्या अनुष्ठानम्, न तु क्रत्वर्थत्वप्रयुक्त्या इत्यादयः ।

५. क्रमनियतिविधेयत्वादयः ।

६. कर्तुरधिकारो नान्धादेः इत्यादयः ।

७. 'समानमितरच्छ्येनेन' इत्यादिप्रत्यक्षवचनेन अग्निहोत्रादिनाम्ना अनुमितवचनेन च सामान्यतोऽतिदेशः ।

८. सौर्यं चरुं निर्वपेत्' इत्यत्र निर्वापः, तद्धितेन देवतात्वम्, औषधद्रव्यकत्वम् इति लिङ्गेन आग्नेयपुरोडाशेतिकर्तव्यतैव, नान्यस्य इत्येवमादिविशेषतोऽतिदेशः ।

९. प्रकृतौ 'अग्नये जुष्टं निर्वपामि' इति पठिते मन्त्रे विकृतौ सौर्यचरौ अग्निपदपरित्यागेन सूर्यपदप्रक्षेपेण सूर्याय जुष्टं निर्वपामि' इत्येवमादिः ऊहः ।

१०. कृष्णलेषु चोदकप्राप्तस्य ( अतिदेशप्राप्तस्य ) अवघातस्य वितुषीकरणासम्भवेन लोपः इत्येवमादिर्बाधः ।

११. बहूनामाग्नेयादीनां प्रधानानां सकृदनुष्ठितेन प्रयाजाद्यङ्गेन उपकारः इति तन्त्रम् ।

१२. प्रधानस्य पशोरुपकाराय अनुष्ठितेन प्रयाजाद्यङ्गेन पश्वङ्गपुरोडाशेऽपि उपकारः इत्यादिप्रसङ्गः ।

---

अन्त्येषां चतुर्णामध्यायानां नाम—'सङ्कर्षकाण्डम्' ।

## शास्त्रविचारतरङ्गिणीप्रवाहकेण

### विरचिता अन्ये ग्रन्था:

१. मानसभारती ( श्रीमद्गोस्वामितुलसीदासरचितस्य श्रीमद्रामचरित-मानसस्य पद्यमयं प्रतिपङ्क्ति संस्कृतरूपान्तरम् )

२. छन्दःसङ्ग्रहः

३. अलङ्कारदर्पणः

४. शिशुपालवधमहाकाव्यस्य प्रथमसर्गस्य संस्कृतहिन्दीटीका

५. ,, ,, चतुर्थसर्गस्थानां ( १–३६ ) श्लोकानां संस्कृत हिन्दी टीका

६. बी. ए. संस्कृत गाइड प्रथमभागः

७. ,, ,, द्वितीयभागः

८. भावनाषोडशी ( स्वरचितकवितासङ्ग्रहः )

९. साहित्यदर्पणस्य षष्ठपरिच्छेदस्य ( १–८१ कारिकाणां ) 'हिन्दी' व्याख्या

१०. सप्तशृङ्गिक्षेत्रमाहात्म्यस्य 'मराठी' व्याख्या

११. 'ऋग्वेदः'—शब्दार्थाः टिप्पण्यश्च ( प्रथमाष्टकम् )

